वर्जयेत् कौलिकाकारं मित्रं प्राज्ञतरो नरः ।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः ॥ १२ ॥
ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणं ॥ १३ ॥

५ परं वयं वनचराः । युष्मदीयं च जलान्ते गृहं । तत् कथं शक्यते तत्र गन्तुं । तस्मात् तामपि भ्रातृपत्नीमत्रानय । येन प्रणम्य तस्या आशीर्वादं गृह्णामि । स आह । मित्र अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशे ऽस्मद्गृहं । तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ । सो ऽपि तच्छ्रुत्वा सानन्दमाह । भद्र यद्येवं तर्हि त्वर्यतां । किं विलम्बितेन । एषो
१० ऽहं तव पृष्ठमारूढः । तथानुष्ठिते ऽगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच । भ्रातः शनैः शनैर्गम्यतां । जलकल्लोलैः प्लाव्यते मे शरीरं । तदाकर्ण्य मकरश्चिन्तयामास । असावगाधं जलं प्राप्तो मे वशः सञ्जातः । मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति । तस्मात् कथयाम्यस्य निजाभिप्रायं येनाभीष्टदेवतास्मरणं
१५ करोति । आह च । भो मित्र त्वं वधाय मया समानीतो भार्यावाक्येन विश्वास्य । तत् स्मर्यतामभीष्टदेवता । सो ऽब्रवीत । भ्रातः किं मया तस्यास्तवापि चापकृतं यस्मात् भवता मे बधोपायश्चिन्तितः । मकर आह । भो तस्यास्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः सञ्जातः । तेनैतदनुष्ठितं । ततः प्रत्युत्पन्नमतिर्वानर
२० आह । भद्र यद्येवं तत् किं त्वया न मम तत्रैव व्याहृतं । येन स्वहृदयं जम्बूकोटरे सदैव मया सुगुप्तीकृतं । तत् भ्रातृपत्न्या अर्पयामि । त्वयाहं शून्यहृदयो ऽत्र कस्मादानीतः । तदाकर्ण्य मकरः सानन्दमाह । भद्र यद्येवं तदर्पय मे स्वहृदयं । येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति । अहं त्वां तमेव जम्बूपादपं प्रापयामि । एवमुक्त्वा
२५ निवर्त्य जम्बूतरुतलं समागमत् । वानरो ऽपि जल्पितविविधोपया

चितशतः कथमपि जलधितीरं समासादितवान्। ततश्च दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास। अहो मया लब्धास्तावत् प्राणाः। अथवा साध्विदमुच्यते।

न विश्वसेदविश्वस्ते विश्वस्ते ऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १४ ॥ ५

तन्ममैतदद्य पुनर्जन्मदिनमिव सञ्जातं। इति चिन्तयानं मकर आह। भो मित्र अर्पय मे तद्हृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति। अथ विहस्य निर्भर्त्सयन् वानरस्तमाह। धिग् धिग् मूर्ख विश्वासघातक किं कस्यचिद्हृदयद्वयं भवति। तदाशु गम्यतां जम्बूवृक्षस्याधस्तात्। न भूयो ऽपि त्वयात्रागन्तव्यं। उक्तं च यतः। १०

सकृद्दुष्टं तु यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भादश्वतरी यथा ॥ १५ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान्। अहो मया मूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः। तद्यद्यसौ पुनरपि कथञ्चिद्विश्वासं गच्छति। तद्भूयो ऽपि विश्वासयामि। आह च। मित्र तस्या न किञ्चित् १५ तव हृदयेन प्रयोजनं। मया तव हृदयाभिप्रायपरीक्षणार्थं हास्येनेदमभिहितं। तदागच्छ प्राघुणकन्यायेनास्मदावासं। त्वद्भ्रातृपत्नी त्वां प्रत्युत्कण्ठिता तिष्ठति। वानर आह। भो दुष्ट गम्यतामधुना। नाहमागमिष्यामि। उक्तं च।

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति। २०
आख्याहि भद्रे प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपं ॥ १६ ॥

मकर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित् कूपे कथा गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचिद्दायादैरुद्वेजितो ॥१॥ ऽरघट्टघटिकामारुह्य कूपात् क्रमेण निष्क्रान्तः। अथ तेन चिन्तितं। कथं तेषां दायादानां मयापकारः कर्तव्यः। उक्तं च। २५

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥१७॥

इत्येवं बहु चिन्तयन् स विले प्रविशन्तं प्रियदर्शनाभिधं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयो ऽप्यचिन्तयत्। एनं कृष्णसर्पं तत्र कूपे नीत्वा ५सकलदायादानामुच्छेदं करिष्यामि। उक्तं च यतः।

शत्रुणा योजयेच्छत्रुं बलिना बलवत्तरं ।
स्वकार्याय यतो न स्यात् काचित् पीडात्र तत्क्षये ॥१८॥

तथा च। शत्रुमुन्मूलयेत् प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनैव कण्टकं ॥१९॥

१०एवं स विभाव्य विलद्वारं गत्वा तमाहूतवान्। एह्येहि प्रियदर्शन एह्येति। तच्छ्रुत्वा सर्पश्चिन्तयामास। य एष मामाह्वयते स स्वजातीयो न भवति। यतो नैषा सर्पिणी। अन्येन केनापि सह मर्त्यलोके मम सन्धानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि को ऽयं भविष्यति। उक्तं च यतः।

१५ यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥२०॥

कदाचित् को ऽपि मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति। अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्विपक्षस्यार्थे मामाह्वयति। प्राह च। भोः को भवान्। स आह। अहं गङ्गदत्तो नाम मण्डू२०काधिपतिस्त्वत्सकाशे मैत्र्यार्थमभ्यागतः। तच्छ्रुत्वा सर्प आह। भो अश्रद्धेयमेतत्। तृणानां वह्निना सह मैत्रीसङ्गमः क्व। उक्तं च।

यो यस्य जायते बध्यः स स्वप्ने ऽपि कथञ्चन ।
न तत्समीपमभ्येति तत् किमेवं प्रजल्पसि ॥२१॥

गङ्गदत्त आह। भो सत्यमेतत्। स्वभाववैरी त्वमस्माकं। परं परिभ२५वादहं त्वत्सकाशं प्राप्तः। उक्तं च।

सर्वनाशे च सञ्जाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च ॥ २२ ॥

सर्प आह । कथय कस्मात् ते परिभवः । स आह । दायादेभ्यः । सर्पो ऽब्रवीत् । अथ क्व त आश्रयः । वाप्यां कूपे तडागे ह्रदे वा । तत् कथय स्वाश्रयं । तेनोक्तं । पाषाणचयनिबद्धे कूपे । सर्प आह । ५ अपदा वयं । तन्नास्ति तत्र मे प्रवेशः । प्रविष्टस्य च स्थानं नास्ति यत्र स्थितस्तव दायादान् व्यापादयामि । तद्गम्यतां । उक्तं च ।

यच्छक्यं ग्रसितुं शस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत् तदद्यं भूतिमिच्छता ॥ २३ ॥

गङ्गदत्त आह । भो समागच्छ त्वं । अहं सुखोपायेन तत्र तव प्रवेशं १० कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति । तत्र स्थितस्त्वं लीलया तान् दायादान् साधयिष्यसि । तच्छ्रुत्वा सर्पो ऽप्य चिन्तयत् । अहं तावत् परिणतवयाः कदाचित् कथञ्चिन्मूषकमेकं प्राप्नोमि न वा । तत् सुखावहो जीवनोपायो ऽयमनेन कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान् मण्डूकान् भक्षयामीति । अथवा साध्विदमुच्यते । १५

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः ।
स हि सर्वसुखोपायं वृत्तिमाचरयेद्बुधः ॥ २४ ॥

एवं विचिन्त्य तमाह । भो गङ्गदत्त यद्येवं तदग्रे भव येन तत्र गच्छावः । गङ्गदत्त आह । भो प्रियदर्शन अहं त्वां सुखोपायेन तत्र नेष्यामि । स्थानं च दर्शयिष्यामि । परं त्वया मत्परिजनो रक्षणीयः । केवलं या २० नहं तव दर्शयिष्यामि त एव भक्षणीया इति । सर्प आह । भद्र साम्प्रतं त्वं मे मित्रं जातं । तन्न भेतव्यं । त्वद्वचनेन भक्षणीयास्ते दाया दाः । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपान्तमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे स्थित्वा दर्शितास्ते दायादाः । ते च २५

तेन सर्वे शनैः शनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभिहितं।
भद्र निःशेषितास्ते रिपवः। तत् प्रयच्छ मे ऽन्यत् किंचिद्भोजनं यतो
ऽहं त्वयात्रानीतः। गङ्गदत्त आह। कृतं त्वया मित्रकृत्यं। तत् सा
म्प्रतमनेनैव घाटिकायन्त्रमार्गेण गम्यतामिति। सर्प आह। भो गङ्गदत्त
५ न सम्यगभिहितं भवता। कथमहं तत्र गच्छामि। मदीयं बिलदुर्ग
मन्येन रुद्धं भविष्यति। तस्मादत्र स्थितस्य मण्डूकमेकैकं स्ववर्गीयं
प्रयच्छ। नो चेत् सर्वानपि भक्षयिष्यामीति। तच्छ्रुत्वा गङ्गदत्तो व्या
कुलितमना व्यचिन्तयत्। अहो किमेतन्मया कृतमेनं समानीय।
तद्यदि निषेधयिष्यामि तत् सर्वानपि भक्षयिष्यति। अथवा युक्तमुच्यते।

१० यो ऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः।
स करोति न सन्देहः स्वयं हि विषभक्षणं॥२५॥

तत् प्रयच्छाम्यस्यैकैकं दिनं प्रति सुहृदमपि। उक्तं च।

सर्वस्वहरणे शक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन बाडवं सागरो यथा॥२६॥

१५ यो दुर्बलो ऽणूनपि याच्यमानो बलीयसा यच्छति नैव साम्ना।
प्रयच्छते नैव च दर्श्यमानं खारीं स चूर्णस्य पुनर्ददाति॥२७॥

तथा च। सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः॥२८॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः।
२० एतदेव हि पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणं॥२९॥

एवं निश्चित्य तमेकैकं मण्डूकं नित्यमेवादिशत्। सो ऽपि तं भक्ष
यित्वान्यमपि तस्य परोक्षे भक्षयति। अथवा साध्विदमुच्यते।

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति॥३०॥

२५ अथान्यदिने तेनापरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो

नाम मण्डूको भक्षितः। तं भक्षितं मत्वा गङ्गदत्तः सुरागस्वरेण धिग्
धिक् प्रलापकरः कथञ्चिदपि न क्रन्दनाद्विरराम। ततः स्वपत्न्याभिहितः।

किं क्रन्दसि दुराक्रन्द स्वपक्षक्षयकारक।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ॥३१॥

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणं। अस्य बधोपायो वा। अथ ५
गच्छता कालेन सकलमपि कवलितं मण्डूककुलं। केवलमेको गङ्ग
दत्तस्तिष्ठति। ततश्च प्रियदर्शनेन भणितं। भद्र गङ्गदत्त बुभुक्षितो
ऽहं। निःशेषिताः सर्वे मण्डूकाः। भवांस्तिष्ठति। तद्दीयतां मे कि
ञ्चिद्भोजनं यतो ऽहं त्वयात्रानीतः। स आह। भो मित्र न त्वयात्र
विषये मयि विद्यमाने कापि चिन्ता कार्या। तद्यदि मां प्रेषयिष्यसि १०
ततो ऽन्यकूपस्थानपि मण्डूकान् विश्वास्यात्रानयामि। स आह। मम
तावत् त्वमभक्ष्यो भ्रातृस्थाने। तद्यद्येवं करोषि तत् साम्प्रतं पितृस्थाने
भवसि। तदेवं क्रियतामिति। सो ऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य
विविधदेवतोपकल्पितपूजोपयाचितो ऽस्मात् कूपाद्विनिष्क्रान्तः। प्रि
यदर्शनो ऽपि तदागमनकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ १५
चिरादप्यनागते गङ्गदत्ते प्रियदर्शनो ऽन्यकोटरनिवासिनीं गोधामुवाच।
भद्रे क्रियतां मे स्तोकं साहाय्यं। यतश्चिरपरिचितस्ते गङ्गदत्तः।
तद्गत्वा तत्सकाशं कुत्रचिज्जलाशये ऽन्विष्य मम सन्देशं कथय। यदा
गम्यतां द्रुततरमेकाकिनापि भवता यद्यन्ये मण्डूका नागच्छन्ति। नाहं
त्वया विनात्र वस्तुं शक्नोमि। तथाहं यदि त्वां प्रति विरुद्धमाचरामि २०
तन्मदीयं जन्म सुकृतं तवेति। गोधापि तद्वचनाद्द्रुततरं गङ्गदत्तमन्वि
ष्याह। भद्र गङ्गदत्त स तव सुहृत् प्रियदर्शनस्तव मार्गं समीक्षमाणा
स्तिष्ठति। तच्छीघ्रमागम्यतां। अपरञ्च तेन तव विरूपकरणार्थे जन्म
सुकृतमन्तरे धृतं। तन्निःशङ्केन मनसा समागम्यतामिति। तदाकर्ण्य
गङ्गदत्तः प्राह। २५

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति।
आख्याहि भद्रे प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपं ॥३२॥

इत्येवमुक्त्वा स तां विसर्जयामास। तद्भो दुष्टजलचर अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चिदप्यायास्यामि। तच्छ्रुत्वा मकर आह। भो मित्र
५ नैतद्युज्यते ते कर्तुं। सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन। अन्यथा तवोपरि प्रायोपवेशनं करिष्यामि। वानर आह। मूढ किमहं लम्बकर्णो मूर्खो दृष्टापायो ऽपि स्वयमेव तत्रैव गत्वात्मानं व्यापादयामि। यतः

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमं।
१० अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥३३॥

कथा ॥२॥ मकर आह। भद्र स को लम्बकर्णः। कथं दृष्टापायो ऽपि मृतः। तन्मे निवेद्यतां। वानर आह। अस्ति कस्मिंश्चिद्वनोद्देशे करालकेशरो नाम सिंहः प्रतिवसति स्म। तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारको ऽस्ति। अथ कदाचित् तस्य सिंहस्य
१५ हस्तिना सह युध्यमानस्य शरीरे गुरुतराः प्रहाराः सञ्जाता यैः पदमेकमपि चलितुं न शक्नोति। तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन्नहनि सिंहमवोचत्। स्वामिन् बुभुक्षया पीडितो ऽहं। पदात् पदमपि चलितुं न शक्नोमि। तत् कथं ते शुश्रूषां करोमि। सिंह आह। भो गच्छान्वेषय किञ्चित् सत्वं येनेमा
२० मवस्थां गतो ऽपि व्यापदयामि। तदाकर्ण्य शृगालो ऽन्वेषणं कुर्वन् कञ्चित् समीपवर्तिनं ग्राममासादितवान्। तत्र च लम्बकर्णो नाम गर्दभस्तडागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् दृष्टः। ततश्च समीपवर्तिना भूत्वा तेनाभिहितः। माम नमस्कारो ऽयं मदीयः सम्भाव्यतां। चिराद्दृष्टो ऽसि। तत् कथय किमेवं दुर्बलतां गतः।
२५ लम्बकर्ण आह। भो भगिनीसुत किं कथयामि। रजको ऽतिनिर्दयो

ऽतिभारेण मां पीडयति। घासमुष्टिमपि न प्रयच्छति। केवलमत्र दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत् कुतो मे शरीरपुष्टिरिति। शृगाल आह। माम यद्येवं तदस्ति मरकतसदृशशस्यप्रायो नदीसनाथो रमणीयतरः प्रदेशः। तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवन् तिष्ठ। लम्बकर्ण आह। भो भगिनीसुत युक्तमुक्तं भवता। ५ परं वयं ग्राम्याः पशवो ऽरण्यचराणां बध्याः। तत् किं तेन भव्यप्रदेशेन। शृगाल आह। माम मैवं वद। मद्भुजपञ्जरपरिरक्षितः प्रदेशो ऽसौ। तन्नास्ति कस्यचिदपरस्य तत्र प्रवेशः। अपरमनेनैव भवद्विधिना रजककदर्थितास्तत्र तिस्रो रासभ्यो ऽनाथाः सन्ति। ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः। यदि त्वमस्माकं सत्यो मातुलः। तदा किं १० चिद्ग्रामान्तरं गत्वास्मद्योग्यं कञ्चित् पतिमानय। एतदर्थे त्वामहं तत्र नयामि। अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गो लम्बकर्णस्तमुवाच। भद्र यद्येवं तदग्रे भव। त्वरितं तत्र गच्छावः। अथवा साधिदमुच्यते।

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्। १५
यस्याः सङ्गेन जीव्येत म्रियते च वियोगतः ॥ ३४॥

तथा च। यासां नाम्नापि कामः स्यात् सङ्गमं दर्शनं विना।
तासां दृक्सङ्गमं प्राप्य यन्न द्रवति कौतुकं ॥ ३५॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः। सिंहो ऽपि व्यथाकुलस्तं गर्दभं दृष्ट्वा यावत् समुत्तिष्ठति। तावद्रासभः पलायितुमारब्ध २० वान्। अथ तस्य पलायमानस्य सिंहेन तलप्रहारो दत्तः। स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः। अत्रान्तरे शृगालः कोपाविष्टस्तमुवाच। भो किमेवंविधः प्रहारस्ते। यदि गर्दभो ऽपि तव पुरो बलाद्गच्छति। तत् कथं गजेन सह युद्धं करिष्यसि। तद्दृष्टं ते बलं। अथ विलक्षस्मितं सिंह आह। भो किमहं करोमि। मया न २५

क्रमः सज्जीकृत आसीत्। अन्यथा गजो ऽपि मत्क्रमाक्रान्तो न गच्छति। शृगाल आह। अद्याप्येकवारं तवान्तिके तमानयिष्यामि। परं त्वया सज्जीकृतक्रमेण स्थातव्यं। सिंह आह। भद्र यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रैवागमिष्यति। तदन्यत् किमपि सत्त्वमन्वि-५ष्यतां। शृगाल आह। किं तवानेन व्यापरेण। त्वं केवलं सज्जितक्रमस्तिष्ठ। तथानुष्ठिते शृगालो ऽपि यावद्रासभमार्गेण गच्छति तावत् तत्रैव स्थाने चरन् दृष्टः। अथ शृगालं दृष्ट्वा रासभः प्राह। भो भगिनीसुत शोभनस्थाने त्वयाहं नीतो द्राग्मृत्युवशं गतः। तत् कथय किं तत् सत्त्वमतिरौद्रं यस्य वज्रसदृशकरप्रहारादहं मुक्तः। तच्छ्रुत्वा १० प्रहसन् शृगाल आह। माम सा वन्यसुखेनातिपुष्टा रासभी त्वामायान्तं दृष्ट्वा सानुरागालिङ्गितुमिच्छुर्धाविता। त्वं च कातरत्वान्नष्टः। सा पुनर्न शक्ता त्वां विना स्थातुं। तया तु नश्यतो ऽपि भवतो ऽवलम्बनार्थं हस्तः प्रसारिता नान्यकारणेन। तदागच्छ। स त्वत्कृते प्रायोपवेशनकृतमतिरेतद्वदति। यल्लम्बकर्णो यदि मे भर्ता न भवति। १५ तदहमग्नौ जले वा प्रविशामि। विषं वा भक्षयिष्यामि। पुनस्तस्य वियोगं सोढुं न शक्नोमि। तत् प्रसादं कृत्वा तत्रागम्यतामिति। नो चेत् स्त्रीहत्या ते भविष्यति मन्मथश्च तव प्रकोपं करिष्यति। उक्तं च यतः।

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसम्पत्करीं।
२० एनां ये प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः।
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ३६ ॥

अथासौ तद्वचनप्रत्ययितो भूयो ऽपि तेन सह प्रस्थितः। अथवा साधिदमुच्यते।

२५ जानन्नपि नरो दैवात् प्रकरोति विगर्हितं।

कर्म किं कस्यचिल्लोके गर्हितं रोचते कथं ॥ ३७॥

अत्रान्तरे धूर्तजनवचनशतप्रतारितो रासभः पुनरपि सिंहस्यान्तिकमा गतः। तत् प्राक्सञ्जितक्रमेण सिंहेन लम्बकर्णो व्यापादितः। ततश्च तं कृत्वा शृगालं रत्नपालं निरूप्य स्वयं स्नानार्थं नद्यां गतः। अथ शृगालेनातिलौल्यौत्सुक्यात् खरस्य कर्णसहितं हृदयं भक्षितं। अत्रा ५ न्तरे यावत् सिंहः स्नात्वा कृतदेवार्चनः प्रतर्पितपितृगणः। तावत् कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह। पाप किमिदमनुचितं कर्म समाचरितं। यत् कर्णहृदयभक्षणेनायमुच्छिष्टतां नीतः। शृगालः सविनयमाह। स्वामिन् मा मैवं वद। यत्कर्णहृदयरहितो ऽयं रासभ आसीत्। तेनेहागत्य त्वामव १० लोक्य भयाद्गत्वा भूयो ऽप्यागतः। अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेन सह संविभज्य निःशङ्कितमनास्तं भक्षितवान्। अतो ऽहं ब्रवीमि।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमं।

अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥ ३८॥

तन्मूर्ख कपटं कृतं। अपरं त्वया युधिष्ठिरेणेव सत्यवचनेन विनाशितं। १५ अथवा साध्विदमुच्यते।

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।

स स्वार्थाद्भ्रस्यते नूनं युधिष्ठिर इवापरः ॥ ३९॥

मकर आह। कथमेतत्। वानरः कथयति। अस्ति कस्मिंश्चि कथा दधिष्ठाने युधिष्ठिरनामा कुम्भकारः प्रतिवसति स्म। स कदाचित् प्रमा ॥३॥ दादर्धभग्नघटकर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन् पतितः। ततः कर्परकोट्या पाटितललाटो रुधिरप्लावितततनुः कृच्छ्रादुत्थाय स्वाश्रयमाजगाम। ततश्चापथ्यसेवनात् प्रहारस्तस्य करालतां गतः कृच्छ्रेण नीरोग्यतां नीतः। अथ कदाचिद्दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको २५

बभूव। सो ऽपि राजा तस्य ललाटे विकरालं प्रहारक्षतं दृष्ट्वा चिन्त
यामास। यद्वीरपुरुषः कश्चिदयं। नूनं तेन ललाटपट्टे ऽस्य सम्मुखः
प्रहारः। अतस्तं सम्मानदानादिभिः सर्वेषां राजपुत्राणां सकाशाद्विशे
षप्रसादेन राजा पश्यति। ते ऽपि राजपुत्रास्तस्य तं प्रसादमतिरेकं
५ दृष्ट्वा परमेर्ष्याधर्मं वहन्तो ऽपि राजभयान्न किञ्चिदूचुः। अथान्यस्मिन्न
हनि तस्य भूपतेर्वीरसम्भावनायां क्रियमाणायां विग्रहे समुपस्थिते
प्रकल्पमानेषु गजेषु सन्नह्यमानेषु वाजिषु योद्धृषु प्रगुणीक्रियमाणेषु
तेन भूभुजा स कुम्भकारः प्रस्तावानुगतं पृष्टो निर्व्यञ्जने। भो राज
पुत्र किं ते नाम का च जातिः। कस्मिन् सङ्ग्रामे प्रहारो ऽयं ते
१० ललाटे लग्नः। स आह। देव नायं शस्त्रप्रहारः। युधिष्ठिराभिधः
कुलालो ऽहं प्रकृत्या। मद्गृहे ऽनेककर्पराण्यासन्। अथाहं कदाचि
न्मद्यपानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः। ततः प्रहारवि
कारो ऽयं मे ललाट एवं विकरालतां गतः। तदाकर्ण्य राजा सव्रीडमु
वाच। अहो वञ्चितो ऽहं राजपुत्रानुकारिणानेन कुलालेन। तद्दी
१५ यतां द्रागेतस्यार्धचन्द्रः। तथानुष्ठिते कुम्भकारः प्राह। देव मा मैवं
कुरु। पश्य मे रणे हस्तलाघवं। राजाह। भो सर्वगुणसम्पन्नो भवान्।
तथापि गम्यतां। उक्तं चः।

शूरो ऽसि कृतविद्यो ऽसि दर्शनीयो ऽसि पुत्रक।
यस्मिन् कुले समुत्पन्नो गजस्तत्र न हन्यते ॥४०॥

कथा कुलालः पृच्छति। कथमेतत्। राजा कथयति। अस्ति कस्मिंश्चिद्वनो
॥४॥ द्देशे सिंहदम्पती प्रतिवसतः स्म। अथ कदाचित् सिंही प्रसूता पुत्र
द्वयमजीजनत्। सिंहो ऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति।
अथान्यस्मिन्नहनि तेन किमपि नासादितं। वने भ्रमतो ऽपि तस्य
रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। स
२५ च बालको ऽयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीवन्तमेव

समर्पितवान्। ततः सिंह्याभिहितं। भो कान्त त्वयानीतं किञ्चिद् स्माकं भोजनं। सिंह आह। प्रिये मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित् सत्वमासादितं। स च बालो ऽयमिति मत्वा न व्यापादितो विशेषात् स्वजातीयश्च। उक्तं च यतः।

स्त्रीविप्रलिङ्गिबालेषु प्रहर्तव्यं न कर्हिचित्। ५

प्राणत्यागे ऽपि सञ्जाते विश्वस्तेषु विशेषतः ॥४१॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु। प्रभाते ऽन्यत् किञ्चिदुपार्जयिष्यामि। सा प्राह। भो कान्त त्वया बालको ऽयं विचिन्त्य न हतः। तत् कथमेनमहं स्वोदरार्थे विनाशयामि। उक्तं च।

अकृत्यं नैव कर्तव्यं प्राणत्यागे ऽपि संस्थिते। १०

न च कृत्यं परित्याज्यं धर्म एष सनातनः ॥४२॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति। इत्येवमुक्त्वा तमपि स्वस्तनक्षीरेण परां पुष्टिमनयत्। एवं ते त्रयो ऽपि शिशवः परस्परमज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति। अथ कदाचित् तत्रवने भ्रमन्नरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि १५ कुपिताननौ तं प्रति प्रचलितौ यावत् तावत् तेन शृगालसुतेनाभिहितं। अहो गजो ऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखं। एवमुक्त्वा गृहं प्रधावितः। तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ। अथवा साध्विदमुच्यते।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति। २०

सोत्सहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥४३॥

तथा च। अत एव हि वाञ्छन्ति भूपा योधान् महाबलान्।

शूरान् वीरान् कृतोत्साहान् वर्जयन्ति च कातरान् ॥४४॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः। यथा गजं दृष्ट्वा दूरतो ऽपि नष्टः। सो ऽपि तदाकर्ण्य कोपा २५

विष्टमनाः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भृकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्युवाच। ततः सिंह्यैकान्ते नीत्वा प्रबोधितो ऽसौ। वत्स मैवं कदाचिज्जल्प। भवदीयलघुभ्रातरावेतौ। अथासौ प्रभूतकोपाविष्टस्तामुवाच। किमहमेताभ्यां शौर्येण रूपेण विद्याभ्या
५ सेन कौशलेन वा हीनः। येन मामुपहसतः। तन्मयावश्यमेतौ व्यापादनीयौ। तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह।

शूरो ऽसि कृतविद्यो ऽसि दर्शनीयो ऽसि पुत्रक।
यस्मिन् कुले समुत्पन्नो गजस्तत्र न हन्यते ॥४५॥

तत् सम्यक् शृणु वत्स। त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण
१० पुष्टिं नीतः। तद्यावदेतौ मत्पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः। तावद्द्रुततरं गत्वा स्वजातीयानां मध्ये भव। नो चेदाभ्यां हतो मृत्युपथं समेष्यसि। सो ऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैरपसृत्य स्वजात्या मिलितः। तस्मात् त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति। तावद्द्रुततरमपसर। नो चेदेतेषां सकाशाद्विडम्ब
१५ नां प्राप्य मरिष्यसि। कुलालो ऽपि तदाकर्ण्य सत्वरं प्रनष्टः। अतो ऽहं ब्रवीमि।

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थाद्भ्रस्यते नूनं युधिष्ठिर इवापरः ॥४६॥

धिग्मूर्ख यत् त्वया स्त्रियो ऽर्थे एतत् कार्यमनुष्ठातुमारब्धं। न हि
२० स्त्रीणां कथंचिद्विश्वासमुपगच्छेत्। उक्तं च।

यदर्थे स्वकुलं त्यक्तं जीवितार्द्धं च हारितं।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ॥४७॥

कथा ॥५॥ मकर आह। कथमेतत्। वानर आह। अस्ति कस्मिंश्चिदधिष्ठाने को ऽपि ब्राह्मणः। तस्य च प्रियातिप्राणप्रिया। सापि प्रतिदिनं
२५ कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति। सो ऽपि ब्राह्मणः

कलहमसहमानो भार्यावात्सल्यात् स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टं देशान्तरं गतः। अथ महाटवीमध्ये ब्राह्मण्याभिहितः। आर्यपुत्र तृष्णा मां बाधते। तदुदकं क्वाप्यन्वेषय। अथासौ तद्वचनानन्तरं यावदुदकं गृहीत्वा समागच्छति। तावत् तां मृतामपश्यत्। अतिव ल्लभतया विषादं कुर्वन् यावद्विलपति। तावदाकाशे वाचं शृणोति। ५ तथा हि यदि ब्राह्मण त्वं स्वकीयजीवितव्यार्द्धं ददासि। ततस्ते जीवति ब्राह्मणी। तच्छ्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवि तार्द्धं दत्तं। वाक्सममेव च ब्राह्मणी जीविता सा। अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ। ततः क्रमेण कस्यचिन्नग रस्य प्रवेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्यामभिहितवान्। भद्रे १० यावदहं भोजनं गृहीत्वा समागच्छामि तावदत्र त्वया स्थातव्यं। इत्य भिधाय प्रायासीत्। अथ तस्यां पुष्पवाटिकायां पङ्गुररघट्टं खेलयन् दिव्यगिरा गीतमुद्गिरयति। तच्च श्रुत्वा कुसुमेषुणार्दितया तत्सकाशं गत्वाभिहितं। भद्र यदि मां न कामयसे। तन्मत्सक्ता स्त्रीहत्या तव भविष्यति। पङ्गुरब्रवीत्। किं व्याधिग्रस्तेन मया करिष्यसि। साब्र १५ वीत्। किमनेनोक्तेन। अवश्यं त्वया सह मया सङ्गमः कर्तव्यः। तच्छ्रुत्वा तथा कृतवान्। सुरतानन्तरं साब्रवीत्। इतः प्रभृति याव ज्जीवं मयात्मा भवते दत्तः। इति ज्ञात्वा भवानप्यस्माभिः सहागच्छतु। सो ऽब्रवीत्। एवमस्तु। अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुमारब्धः। साब्रवीत्। एष पङ्गुर्बुभुक्षितः। तदेतस्या २० पि कियन्तमपि ग्रासं देहीति। तथैवानुष्ठिते ब्राह्मण्याभिहितं। ब्राह्मण सहायहीनस्त्वं यदा ग्रामान्तरं गच्छसि। तदा मम वचनसहायो ऽपि नास्ति। तत एनं पङ्गुं गृहीत्वा गच्छावः। सो ऽब्रवीत्। न शक्नो म्यात्मानमप्यात्मना वोढुं। किं पुनरेनं पङ्गुं। साब्रवीत् पेटाभ्यन्तरस्थ मेनमहं नेष्यामि। अथ तत् कृतकवचनव्यामोहितचित्तेन तेन प्रति २५

पन्नं। तथानुष्ठित एवान्यस्मिन् दिने कूपोपकण्ठे विश्रान्तो ब्राह्मण
स्तया पङ्गुपुरुषासक्तया सम्प्रेर्य कूपान्तः पातितः। सापि पङ्गुं गृहीत्वा
कस्मिंश्चिन्नगरे प्रविष्टा। तत्र शुल्कचौर्यरक्षानिमित्तं राजपुरुषैरितस्ततो
भ्रमद्भिस्तन्मस्तकस्था पेटा दृष्टा। बलादाछिद्य राजाग्रे नीता। राजा
५ च यावत् तामुत्पाटयति। तावत् तं पङ्गुं ददर्श। ततः सा ब्राह्मणी
विलापं कुर्वती राजपुरुषानुपदमेव तत्रागता। राज्ञा पृष्टा को वृत्तान्त
इति। साब्रवीत्। ममैष भर्ता व्याधिबाधितो दायादसमूहैरुद्वेजितो
मया स्नेहव्याकुलितमानसया शिरसि कृत्वा त्वत्सकाशमानीतः। तच्छ्रु
त्वा राजाब्रवीत्। ब्राह्मणि मे त्वं भगिनी। ग्रामद्वयं गृहीत्वा भर्त्रा
१० सह भोगान् भुञ्जाना सुखेन तिष्ठ। अथ स ब्राह्मणो दैववशात् के
नापि साधुना कूपादुत्तारितः परिभ्रमंस्तदेव नगरमायातः। तया दुष्ट
भार्यया दृष्टो राज्ञे निवेदितः। राजन्नयं मम भर्तुर्वैरी समायातः। राज्ञा
पि बध आदिष्टः। सो ऽब्रवीत्। देव अनया मम सक्तं किञ्चिद्गृहीत
मस्ति। यदि त्वं धर्मवत्सलः। तद्दापय। राजाब्रवीत्। भद्रे यत् त्वया
१५ स्य सक्तं किञ्चिद्गृहीतमस्ति तत् समर्पय। सा प्राह। देव मया न
किञ्चिद्गृहीतं। ब्राह्मण आह। यन्मया त्रिवाचिकं स्वजीवितार्द्धं दत्तं
तद्देहि। अथ सा राजभयात् तत्रैव त्रिवाचिकमेव जीवितं मया दत्त
मिति जल्पन्ती प्राणैर्विमुक्ता। ततः सविस्मयं राजाब्रवीत्। किमेत
दिति। ब्राह्मणेनापि पूर्ववृत्तान्तः सकलो ऽपि तस्मै निवेदितः।
२० अतो ऽहं ब्रवीमि।

यदर्थे स्वकुलं त्यक्तं जीवितार्द्धं च हारितं।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ॥४८॥

वानरः पुनरप्याह। साधु चेदमुपाख्यानकं श्रूयते।

न किं दद्यान्न किं कुर्यात् स्त्रीभिरभ्यर्थितो नरः।
२५ अनश्वा यत्र हेषन्ते शिरो ऽपर्वणि मुण्डितं ॥४९॥

मकर आह। कथमेतत्। वानरः कथयति। अस्ति प्रख्यातबलपौरुषो ऽनेकनरेन्द्रवृन्दमुकुटमरीचिजालजटिलीकृतपादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्यन्तायाः पृथिव्या भर्ता नन्दो नाम राजा। तस्य सर्वशास्त्राधिगतः समस्ततत्त्वः सचिवो वररुचिर्नाम। तस्य च प्रणयकलहेन जाया कुपिता। सा चातीव वल्लभानेकप्रकारं परितोष्यमाणापि न प्रसीदति। ब्रवीति च भर्ता। भद्रे येन प्रकारेण तुष्यसि तं वद। निश्चितं करोमि। ततः कथंचित् तयोक्तं। यदि शिरो मुण्डयित्वा मम पादयोर्निपतसि। तदा प्रसादाभिमुखी भवामि। तथानुष्ठिते प्रसन्नासौ। अथ नन्दस्य भार्यापि तथैव रुष्टा प्रसाद्यमानापि न तुष्यति। तेनोक्तं। भद्रे त्वया विना मुहूर्तमपि न जीवामि। पादयोः पतित्वा त्वां प्रसादयामि। साब्रवीत्। यदि खलीनं मुखे प्रक्षिप्याहं तव पृष्ठे समारुह्य त्वां धावयामि। धावितस्तु यद्यश्ववद्धेषसे। तदा प्रसन्ना भवामि। तथैवानुष्ठितं। अथ प्रभातसमये सभोपविष्टस्य राज्ञो वररुचिरायातः। तं च दृष्ट्वा राजा पप्रच्छ। भो वररुचे किमपर्वणि मुण्डितं शिरस्ते। सो ऽब्रवीत्।

॥६॥ ५ १० १५

न किं दद्यान्न किं कुर्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र हेषन्ते शिरो ऽपर्वणि मुण्डितं ॥ ५० ॥

तद्भो दुष्टमकर त्वमपि नन्दवररुचिवत् स्त्रीवश्यः। ततस्तद्भद्रानीतेन त्वया मां प्रति बधोपायप्रयासः प्रारब्धः परं स्ववाग्दोषेणैव प्रकटीभूतः। अथवा साधिदमुच्यते। २०

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनं ॥ ५१ ॥

तथा च। सुगुप्तं रक्षमाणो ऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ५२ ॥

मकर आह। कथमेतत्। वानरः कथयति। अस्ति कस्मिंश्चिद् २५

कथा धिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म। तस्य च गर्दभ एको
॥७॥ ऽस्ति। सो ऽपि घासाभावादतिदुर्बलतां गतः। अथ तेन रजकेनाट
·व्यां परिभ्रमता मृतव्याघ्रो दृष्टः। चिन्तितं च। अहो शोभनमापतितं।
अनेन व्याघ्रचर्मणा प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषूत्स्रक्ष्यामि। येन
५ व्याघ्रं मत्वा समीपवर्तिनः क्षेत्रपाला एनं न निःकासयिष्यन्ति। तथा
नुष्ठिते रासभो यथेच्छया यवभक्षणं करोति। प्रत्यूषे भूयो ऽपि रजकः
स्वाश्रयं नयति। एवं गच्छता कालेन स रासभः पीवरतनुर्जातः।
कृच्छ्राद्बन्धनस्थानमपि नीयते। अथान्यस्मिन्नहनि स मदोद्धतो दूरा
द्रासभीशब्दमशृणोत्। तच्छ्रवणमात्रेणैव स्वयं शब्दयितुमारब्धः।
१० अथ ते क्षेत्रपाला रासभो ऽयं व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगड
शरपाषाणप्रहारैस्तं व्यापादितवन्तः। अतो ऽहं ब्रवीमि।

सुगुप्तं रक्षमाणो ऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः॥५३॥

अथैवं तेन सह वदतो मकरस्य जलचरेणैकेनागत्याभिहितं। भो
१५ मकर त्वदीया भार्यानशनोपविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना।
एवं तद्वज्रपातसदृशवचनमाकर्ण्यातीव व्याकुलितहृदयः प्रलपितमेवं
चकार। अहो किमिदं सञ्जातं मे मन्दभाग्यस्य। उक्तं च।

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहं॥५४॥

२० तन्मित्र क्षम्यतां मया ते ऽपराधः कृतः। सम्प्रत्यहं तु स्त्रीवियोगाद्वै
श्वानरप्रवेशं करिष्यामि। तच्छ्रुत्वा वानरः प्रहसन् प्रोवाच। भो ज्ञा
तस्त्वं मया प्रथममेव यत् त्वं स्त्रीवश्यः स्त्रीजितश्च। साम्प्रतं च प्रत्ययः
सञ्जातः। तन्मूढ आनन्दे ऽपि जाते त्वं विषादं गतः। तादृग्भार्यायां
मृतायामुत्सवः कर्तुं प्रयुज्यते। उक्तं च यतः।

२५ या भार्या दुष्टचारित्रा सततं कलहप्रिया।

भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥५५॥
तस्मात् सर्वप्रयत्नेन नामापि परिवर्जयेत् ।
स्त्रीणामिह हि सर्वासां य इच्छेत् सुखमात्मनः ॥५६॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः ।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरित्राः स्त्रियः ॥५७॥ ५
के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीं ।
रम्यां य उपसर्पन्ति दीपाभां शलभा यथा ॥५८॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥५९॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः । १०
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥६०॥
आस्तां तावत् किमन्येन दौरात्म्येनेह योषितां ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥६१॥
रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवं ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥६२॥ १५

मकर आह । भो मित्र अस्त्येतत् । परं किं करोमि । ममानर्थद्वयम तत् सञ्जातं । एकस्तावद्गृहभङ्गः । अपरस्त्वद्विधेन मित्रेण सह चित्त विश्लेषः । अथवा भवत्येवं दैवयोगात् । उक्तं च यतः ।

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके ॥६३॥ २०

वानर आह । कथमेतत् । मकरो ऽब्रवीत् । अस्ति कस्मिं कथा श्चिदधिष्ठाने हालिकदम्पती प्रतिवसतः स्म । सा च हालिकभार्या ॥८॥ पत्युर्वृद्धभावात् सदैवान्यचित्ता न कथञ्चिद्गृहे स्थैर्यमालम्बते । केवलं परपुरुषानन्वेषमाणा परिभ्रमति । अथ केनचित् परवित्तापहा रकेण धूर्तेन सा लक्षिता विजने प्रोक्ता च । सुभगे मृतभार्यो ऽहं । २५

त्वद्दर्शनेन स्मरपीडितश्च। तद्दीयतां मे रतिदक्षिणा। ततस्तयाभि
हितं। भो सुभग यद्येवं तदस्ति मे पत्युः प्रभूतं धनं। स च वृद्धत्वात्
प्रचलितुमप्यसमर्थः। ततस्तद्धनमादायाहमागच्छामि। येन त्वया सहा
न्यत्र गत्वा यथेच्छया रतिसुखमनुभविष्यामि। सो ऽब्रवीत्। रोचते
५ ममाप्येतत्। तत् प्रत्यूषे ऽत्र स्थाने शीघ्रमेव समागन्तव्यं येन शुभतरं
किञ्चिन्नगरं गत्वा त्वया सह जीवलोकः सफलीक्रियते। सापि तथेति
प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्तरि सर्वं वित्त
मादाय प्रत्यूषसमये तत्कथितस्थानमुपाद्रवत्। धूर्तो ऽपि तामग्रे विधाय
दक्षिणां दिशमाश्रित्य सत्वरगतिः प्रस्थितः। एवं तयोर्व्रजतोर्योजनद्वय
१० मात्रेणाग्रतः काचिन्नदी समुपस्थिता। तां दृष्ट्वा धूर्तश्चिन्तयामास।
किमहमनया यौवनप्रान्तवर्तमानया। किञ्च कदाप्यस्याः पृष्ठतः को
ऽपि समेष्यति। तन्मे महाननर्थः स्यात्। तत् केवलमस्या वित्तमा
दाय गच्छामीति निश्चित्य तामुवाच। प्रिये सुदुस्तरेयं महानदी।
तदहं द्रव्यमात्रां पारे धृत्वा समागच्छामि। ततस्त्वामेकाकिनीं स्वपृ
१५ ष्ठमारोप्य सुखेनोत्तारयिष्यामि। सा प्राह। सुभग एवं क्रियतां।
इत्युक्त्वाशेषं वित्तं तस्मै समर्पयामास। अथ तेनाभिहितं। भद्रे परि
धानाच्छादनवस्त्रमपि समर्पय। येन जलमध्ये निःशङ्का व्रजसि। तथा
नुष्ठिते धूर्तो वित्तं वस्त्रयुगलं चादाय यथाचिन्तितविषयं गतः। सापि
कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीपुलिनप्रदेश उपविष्टा यावत्ति
२० ष्ठति। तावदेतस्मिन्नन्तरे काचिच्छृगालिका मांसपिण्डगृहीतवदना
तत्राजगाम। आगत्य च यावत् पश्यति। तावन्नदीतीरे महान् मत्स्यः
सलिलान्निःक्रम्य बहिःस्थित आस्ते। एतं च दृष्ट्वा सा मांसपिण्डं
समुत्सृज्य तं मत्स्यं प्रत्युपाद्रवत्। अत्रान्तर आकाशादवतीर्य को ऽपि
गृध्रस्तं मांसपिण्डमादाय पुनः खमुत्पपात। मत्स्यो ऽपि शृगालिकां
२५ दृष्ट्वा नद्यां प्रविवेश। अथ सा शृगालिका व्यर्थश्रमा गृध्रमवलोकयन्ती

तया नग्निकया सस्मितमभिहिता ।

गृध्रेणापहृतं मांसं मत्स्यो ऽपि सलिलं गतः ।
मत्स्यमांसपरिभ्रष्टे किं निरीक्षसि जम्बुके ॥ ६४ ॥

तच्छ्रुत्वा शृगालिका तामपि पतिधनजारपरिभ्रष्टां दृष्ट्वा सोपहासमाह ।

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव । ५
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके ॥ ६५ ॥

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितं । यदहो त्वदीयं गृहमप्यपरेण महामकरेण गृहीतं । तच्छ्रुत्वासावतिदुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच । अहो पश्यतां मे दैवोपहतत्वं । मित्रं ह्यमित्रतां यातं । अपरं मे प्रिया मृता । गृहमन्येन १० च व्याप्तं । किमद्यापि भविष्यति । अथवा युक्तमिदमुच्यते ।

क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये वर्द्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणां ॥ ६६ ॥

तत् किं करोमि । किमनेन सह युद्धं करोमि । किं वा साम्नैव सम्बोध्य गृहान्निःसारयामि । किं वा भेदं दानं वा करोमि । अथवामुमेव १५ वानरमित्रं पृच्छामि । उक्तं च ।

यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान् स्वहितान् गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ६७ ॥

एवं सम्प्रधार्य भूयो ऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत् । भो मित्र पश्य मे मन्दभाग्यतां । यत् सम्प्रति गृहमपि मे बलवत्तरेण २० मकरेण रुद्धं । तदहं त्वां प्रष्टुमभ्यागतः । कथय किं करोमि । सामादीनामुपायानां मध्ये कस्यात्र विषयः । स आह । भो कृतघ्न पापचारिन् मया निषिद्धो ऽपि किं भूयो मामनुसरसि । नाहं तव मूर्खस्योपदेशमपि दास्यामि । तच्छ्रुत्वा मकरः प्राह । भो मित्र सापराधस्य मे पूर्वस्नेहमनुस्मृत्य हितोपदेशं देहि । वानर आह । नाहं ते कथ २५

यिष्यामि। यद्भार्यावाक्येन भवताहं समुद्रे प्रक्षेप्तुं नीतः। तदेव न युक्तं। यद्यपि भार्या सर्वलोकादपि वल्लभा भवति। तथापि न मित्राणि बान्धवाश्च भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते। तन्मूर्ख मूढत्वेन नाशस्तव मया प्रागेव निवेदित आसीत्। यतः

५ सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरं ॥ ६८ ॥

कथा ॥ १ ॥ मकर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिदधिष्ठान उद्धलको नाम रथकारः प्रतिवसति स्म। स चातीव दारिद्र्योपहत श्चिन्तितवान्। अहो धिगियं दरिद्रतास्मद्गृहे। यतः सर्वो ऽपि जनः १० स्वकर्मणैव रतस्तिष्ठति। अस्मदीयः पुनर्व्यापारो नात्राधिष्ठाने ऽघति। यतः सर्वलोकानां चिरन्तनाश्चतुर्भूमिका गृहाः सन्ति। मम च नात्र। तत् किं मदीयेन रथकारत्वेन प्रयोजनं। इति चिन्तयित्वा देशान्निःक्रान्तः। यावत् किञ्चिद्वनं गच्छति। तावद्गह्वराकारवनगहनमध्ये सूर्यास्तमनवेलायां स्वयूथाद्भ्रष्टां प्रसववेदनया पीड्यमानामुष्ट्रीमपश्यत्। १५ स च दासेरकयुक्तामुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः। गृहमासाद्य रज्जुं गृहीत्वा तामुष्ट्रिकां बबन्ध। ततश्च तीक्ष्णं परशुमादाय तस्याः कृते पल्लवानयनार्थं पर्वतैकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्वा शिरसि समारोप्य तस्याग्रे निचिक्षेप। तया च तानि शनैः शनैर्भक्षितानि। पश्चात् पल्लवभक्षण २० प्रभावादहर्निशं पीवरतनुरुष्ट्री सञ्जाता। सो ऽपि दासेरको महानुष्ट्रः सञ्जातः। ततः स नित्यमेव दुग्धं गृहीत्वा स्वकुटुम्बं परिपालयति। अथ रथकारेण वल्लभत्वाद्दासेरकग्रीवायां महती घण्टा प्रतिबद्धा। पश्चाद्रथकारो व्यचिन्तयत्। अहो किमन्यैः दुष्कृतकर्मभिः। यावन्ममैतदेवोष्ट्रीपरिपालनमस्य कुटुम्बस्य भव्यं सञ्जातं। तत् किम २५ न्येन व्यापारेण। एवं विचिन्त्य गृहमागत्य प्रियामाह। भद्रे तव

सम्मत्या समीचीनो ऽयं व्यापारः। तत् कुतो ऽपि धनिकात् किञ्चि द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं कलभग्रहणाय। तावत् त्वयैतौ यत्नेन रक्षणीयौ। यावदहमपरामुष्ट्रीं नीत्वा समागच्छामि। ततश्च गुर्ज रग्रामं गत्वोष्ट्रीं गृहीत्वा स्वगृहमागतः। किं बहुना तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च सम्मिलिताः। ततस्तेन महदुष्ट्रयूथं ५ कृत्वा रक्षापुरुषो धृतः। तस्य वर्षं प्रति वृत्त्या करभमेकं प्रयच्छति। अन्यदाहर्निशं दुग्धपानं तस्य कृतं। एवं रथकारो ऽपि नित्यमेवोष्ट्री करभव्यापारं कुर्वन् सुखेन तिष्ठति। अथ ते दासेरका अधिष्ठानोप वन आहारार्थं गच्छन्ति। कोमलवल्लीर्यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये मन्दं मन्दं लीलया गृहमागच्छ १० न्ति। स च पूर्वदासेरको मदातिरेकात् पृष्ठ आगत्य मिलितः। ततस्तैः कलभैरभिहितं। अहो मन्दमतिरयं दासेरको यथा यूथाद्भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति। यदि कस्यापि दुष्टसत्त्वस्य देशे पति ष्यति। तन्नूनं मृत्युमवाप्स्यति। अथ तेषां तद्वनं गाहमानानां कश्चित् सिंहो घण्टारवमाकर्ण्य समायातः। यावदवलोकयति ताव १५ दुष्ट्रीदासेरकानां यूथं गच्छति। एकस्तु पुनः पृष्ठे क्रीडां कुर्वन् वल्लरी श्चरन् यावत्तिष्ठति। तावदन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः। सो ऽपि वनान्निष्क्रम्य यावद्दिशो ऽवलोकयति। तावन्न कश्चिन्मार्गं पश्यति वेत्ति च। यूथाद्भ्रष्टो मन्दं मन्दं बृहच्छब्दं कुर्वन् यावत् कियद्दूरं गच्छति। तावत् तच्छब्दानुसारी सिंहो ऽपि क्रमं कृत्वा २० निःसृतो ऽग्रे व्यवस्थितः। तद्यावदुष्ट्रः समीपमागतः। तावत् सिं हेन लम्फयित्वा ग्रीवायां गृहीतो मारितश्च। अतो ऽहं ब्रवीमि।

सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरं ॥६१॥

अथ तच्छ्रुत्वा मकरः प्राह। भद्र

प्राज्ञः साप्तपदं मैत्र्यं जनाः शास्त्रविचक्षणाः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥७०॥
उपदेशप्रदातॄणां नराणां हितमिच्छतां ।
परस्मिन्निह लोके च व्यसनं नोपपद्यते ॥७१॥

५ तत् सर्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन । उक्तं च ।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥७२॥

तदाकर्ण्य वानरः प्राह । भद्र यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु । उक्तं च ।

१० हतस्त्वं प्राप्स्यसि स्वर्गं जीवन् गृहमथो यशः ।
युध्यमानस्य ते भावि गुणद्वयमनुत्तमं ॥७३॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥७४॥

कथा ॥१०॥ मकर आह । कथमेतत् । सो ऽब्रवीत् । अस्ति कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचिदरण्ये स्वयम्मृतो गजः समासादितः । तस्य समन्तात् परिभ्रमति । परं कठिनां त्वचं भेत्तुं न शक्नोति । अथात्रावसर इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ । अथ समागतं दृष्ट्वा स क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरयुगलः सविनयमुवाच । स्वामिन् त्वदीयो ऽहं लागुडिकः
२० स्थितस्त्वदर्थे गजमिमं रक्षामि । तदेनं भक्षयतु स्वामी । तं प्रणतं दृष्ट्वा सिंहः प्राह । भो नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि । उक्तं च ।

वने ऽपि सिंहा मृगमांसभुक्ता बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता न नीतिमार्गं परिलङ्घयन्ति ॥७५॥

२५ तत् तवैव गजो ऽयं मया प्रसादीकृतः । तच्छ्रुत्वा शृगालः सानन्द

माह। युक्तमिदं स्वामिनो निजभृत्येषु। उक्तं च यतः।

अल्पावस्थो ऽपि महान् स्वामिगुणान्न जहाति तु शुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तिमुक्तो ऽपि ॥७६॥

अथ सिंहे गते कश्चिद्व्याघ्रः समाययौ। तमपि दृष्ट्वासौ व्यचिन्तयत्। अहो एकस्तावत् दुरात्मा प्रणिपातेनापवाहितः। तत् कथमिदानीं ५ मेनमपवाहयिष्यामि। नूनं शूरो ऽयं। न खलु भेदं विना साध्यो भविष्यति। उक्तं च यतः।

न यत्र शक्यते कर्तुं साम दानमथापि वा।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥७७॥

किञ्च सर्वगुणसम्पन्नो ऽपि भेदेन बध्यते। उक्तं च। १०

अन्तःस्थेन विरुद्धेन सुवृत्तेनातिचारुणा।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनं ॥७८॥

एवं सम्प्रधार्य तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससम्भ्रममुवाच। माम कथमत्र भवान् मृत्युमुखे प्रविष्टः। येनैष गजः सिंहेन व्यापादितः। स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन च १५ गच्छता मम समादिष्टं। यदि कश्चिदिह व्याघ्रः समायाति। तत् त्वया सुगुप्तं ममावेदनीयं। येन वनमिदं मया निर्व्याघ्रं कर्तव्यं। यतः पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः। तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितो ऽस्मि। तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस्तमाह। भो भागिनेय देहि मे प्राणदक्षिणां। ततस्त्वया तस्यात्र २० चिरायायातस्यापि मदीया कापि वार्ता नाख्येया। एवमभिधाय सत्वरं पलायांचक्रे। अथ गते व्याघ्रे तत्र कश्चिद्द्वीपी समायातः। तमपि दृष्ट्वासौ व्यचिन्तयत्। दृढदंष्ट्रो ऽयं चित्रकः। तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदं भवति तथा करोमि। एवं निश्चित्य तमप्युवाच। भो भगिनीसुत किमतिचिराद्दृष्टो ऽसि। कथं च बुभुक्षित इव लक्ष्यसे। २५

तदतिथिरसि मे। एषो गजः सिंहेन हतस्तिष्ठति। अहं चास्य तदा दिष्टो रक्षपालः। परं तथापि यावत् सिंहो न समायाति। तावद स्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज। स आह। माम प्येवं तन्न कार्यं मे मांसाशनेन। यतो जीवन्नरो भद्रशतानि पश्यति।
५ उक्तं च। यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत् तदद्यं भूतिमिच्छता ॥७९॥
तत् सर्वथा तदेव भुज्यते यदेव परिणमति। तदहमितो ऽपयास्यामि। शृगाल आह। भो ऽधीर विश्रब्धो भूत्वा भक्षय त्वं। तस्यागमनं दू रतो ऽपि तवाहं निवेदयिष्यामि। तथानुष्ठिते द्वीपिना भिन्नां त्वचं
१० विज्ञाय जम्बुकेनाभिहितं। भो भगिनीसुत गम्यतां गम्यतां। एष सिंहः समायाति। तच्छ्रुत्वा चित्रको दूरं प्रनष्टः। अथ यावदसौ तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति। तावदतिसङ्क्रुद्धो ऽपरः शृ गालः समाययौ। अथ तमात्मतुल्यजातपराक्रमं दृष्ट्वैनं श्लोकमपठत्।
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
१५ नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥८०॥
तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य दिशोभागं कृत्वा स्वयं सु खेन चिरकालं हस्तिमांसं बुभुजे। एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिशोभागं कुरु। नो चेत् पश्चाद्बद्धमूलादस्मात् त्वमपि विनाशमवाप्स्यसि। उक्तं च यतः।
२० सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं ज्ञातितो भयं ॥८१॥
अन्यच्च। सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥८२॥
कथा ॥११॥ मकर आह। कथमेतत्। वानरो ऽब्रवीत्। अस्ति कस्मिंश्चि दधिष्ठाने चित्राङ्गो नाम सारमेयः। तत्र च चिरकालं दुर्भिक्षं पतितं।

अन्नाभावात् सारमेयादयो निष्कुलतां गन्तुमारब्धाः। अथ चित्राङ्गः क्षुत्क्षामकण्ठस्तद्भयाद्देशान्तरं गतः। तत्र च कस्मिंश्चित् पुरे कस्यचि द्गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्नानि भक्षयन् परां तृप्तिं गच्छति। परं तद्गृहाद्बहिर्निष्क्रान्तो ऽन्यैर्मदोद्धत सारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते। ततस्तेन विचि ५ न्तितं। अहो वरं स्वदेशो यत्र दुर्भिक्षे ऽपि सुखेन स्थीयते। न च को ऽपि युद्धं करोति। तदेव स्वनगरं व्रजामि। इत्यवधार्य स्व स्थानं प्रतिजगाम। अथासौ देशान्तरात् समायातः सर्वैरपि स्वजनैः पृष्टः। भो चित्राङ्ग कथयास्माकं देशान्तरवार्तां। कीदृग्देशः। किं चेष्टितं लोकस्य। क आहारः। कश्च व्यवहारस्तत्रेति। स आह। १० किं कथ्यते विदेशस्य स्वरूपविषयः।

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥८३॥

सो ऽपि मकरस्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरमनुज्ञाप्य स्वा श्रयं गतः। तत्र च तेन स्वगृहप्रविष्टेनाततायिना सह विग्रहं कृत्वा १५ दृढसत्त्वावष्टम्भनाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकाल मतिष्ठत्। साध्विदमुच्यते।

अकृत्य पौरुषं या श्रीः किं तयापि सुभोग्यया।
जरद्गवो ऽपि समश्नाति दैवादुपगतं तृणं ॥८४॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके २०
लब्धप्रणाशो नाम चतुर्थं तन्त्रं
समाप्तं

चिदेष वृत्तान्तो दृष्टो भविष्यति। तदा विनष्टो ऽहं। इति विचिन्त्य तं नापितं सन्तोष्य प्रोवाच। यदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण। पुनर्भद्र न कस्यचिदाख्येयो ऽयमस्मद्वृत्तान्तः। नापितो ऽपि तद्वचनमङ्गीकृत्य स्वगृहं गत्वा व्यचिन्तयत्। नूनं सर्वे ऽप्येते नग्नकाः ५ शिरसि काष्ठदण्डहताः काञ्चनमया भवन्ति। तदहमपि प्रातः प्रभूता नामन्त्र्य लगुडैर्हन्मि। येन मे प्रभूतं हाटकं भवति। इत्येवं तस्य चिन्तयतस्तद्दिनं निशा च कथमपि व्यतिचक्राम। अथ प्रभाते समु त्थाय क्षपणकविहारं गत्वोत्तरासङ्गं विधाय जिनस्य प्रदक्षिणात्रयं दत्वा जानुभ्यामवनीं गत्वा वक्त्रद्वारविन्यस्तोत्तरीयाञ्चलः कृताञ्जलिस्तार १० स्वरेणेमं श्लोकमपठत्।

ते जयन्ति जिना येषां केवलज्ञानशालिनां।
मनो भवाभिधे जीवे मानसेनोपराजितं ॥१२॥
सा जिह्वा या जिनं स्तौति तच्चित्तं यत् तदर्पितं।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजकरौ करौ ॥१३॥

१५ इत्येवमन्यदपि बहुधा संस्तुत्य प्रधानक्षपणकमासाद्य क्षितितलनिहि तजानुचरणो नमो ऽस्तु वन्द इत्युक्त्वा लब्धधर्मवृद्ध्याशीर्वादः सुखमा लिकानुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः सप्रश्रयमिदमाह। भग वन्नद्य विहरणक्रिया त्वया समस्तमुनिसहितेनास्मद्गृहे कर्तव्येति। स आह। भो श्रावक धर्मज्ञो ऽपि किमेवं वदसि। किं वयं ब्राह्मणा २० यदामन्त्रणं करोषि। यतो वयं सदैव तत्कालपरिचर्यया भ्रमन्तो भक्ति भाजं श्रावकमवलोक्य तस्य गृहे गच्छामः। कृच्छ्रादभ्यर्थिताः प्राण धारणमात्रामशनक्रियां कुर्मः। तद्गम्यतां न भूयो ऽप्येवं वाच्यं। तच्छ्रुत्वा नापितः प्राह। भगवन् वेद्मि। अहमेतत् करिष्यामि। परं भवतां प्रभूताः श्रावका अर्हणां कुर्वन्ति। अस्माभिस्तु पुनः पुस्तक २५ च्छादनयोग्यानि पटिकर्पटादीनि बहुमूल्यानि प्रगुणीकृतानि सन्ति।

पुस्तकानां च लेखनाय लेखकानां वित्तं प्रदत्तमास्ते। तत् सर्वथा कालोचितमेव कर्तव्यमिति। एवमुक्त्वा स्वगृहं प्रति प्रस्थितः। गृहे गत्वा खदिरमयं लगुडं सज्जीकृत्य कपाटकोणैकदेशे संस्थाप्य सार्धप्रहरैकसमये भूयो ऽपि विहारद्वारमाश्रित्य स्थितः। ततश्च सर्वान् क्रमेण निष्क्रममाणान् गुरुप्रार्थनया स्वगृहमनयत्। ते ऽपि सर्वे कर्पटवित्त ५ लोभेन भक्तियुक्तानपि परिचितश्रावकान् परित्यज्य प्रहृष्टास्तस्य पृष्ठतो जग्मुः। अथवा साध्विदमुच्यते।

एकाकी गृहसत्यक्तः पाणिपात्रो दिगम्बरः।
सो ऽपि संवाह्यते लोके तृष्णया पश्य कौतुकं॥१४॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः। १०
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते॥१५॥

ततो नापितो ऽपि गृहमध्ये तान् प्रवेश्य द्वारं निभृतं विधाय लगुडप्रहारैः शिरसि तानताडयत्। ते ऽपि ताड्यमाना एके पञ्चत्वमुपागता अन्ये भिन्नमस्तकाः फूत्कर्तुमारेभिरे। अत्रान्तरे तदाक्रन्दशब्दमाकर्ण्य पुरकोट्टपालपुरुषाः समागताः। तैरभिहितं। भो किमेष नगर १५ मध्ये महान् कोलाहलः। तद्गम्यतां गम्यतामिति वदन्तः ते सर्वे तद्गृहं यावद्वेगाद्गत्वा पश्यन्ति। तावत् क्षपणका रुधिरप्लावितशरीरा नापितगृहात् पलायमाना दृष्टाः पृष्टाश्च। भो किमेतत्। ते प्रोचुर्यथावस्थितं नापितवृत्तान्तं। तैरपि नापितो दृढबन्धनबद्धो हतशेषक्षपणकैः सह धर्माधिष्ठानं नीतः। कारणिकैः पृष्टश्च। भो किमेतद्भव २० ता कुकृत्यमनुष्ठितं। सो ऽब्रवीत्। भोः किं करोमि। मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः। एतदभिधाय तेषां मणिभद्रवृत्तान्तं यथादृष्टमकथयत्। तैश्च मणिभद्राकारणाय कश्चित् प्रेषितः। तेन च गत्वा मणिभद्रः समानीतः। तैः स पृष्टः। भो श्रेष्ठिन् किं त्वया कश्चित् क्षपणकः व्यापादितः। ततस्तेनापि सर्वः क्षपणकवृ २५

न्तान्तः कथितः। अथ तैरभिहितं। अहो शूलायामारोप्यतामसौ कुप

रीक्षितकारी दुरात्मा नापितः। तथानुष्ठिते तैरभिहितं।

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितं।

पश्चाद्भवति सन्तापो ब्राह्मण्या नकुलाद्यथा ॥१६॥

कथा ॥२॥ मणिभद्रः प्राह। कथमेतत्। ते प्रोचुः। अस्ति कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः। तस्य भार्या प्रसूता पुत्रमेकं नकुलं च सुषुवे। अथ सा सुतवत्सला सुतवन्नकुलमपि स्तन्यदानाभ्यङ्गमर्दनादिभिः पुपोष। परमेष दुष्टजातित्वात् कदाचिदस्य दारकस्य विरुद्धमाचरिष्यतीति नकुलस्य न विश्वसिति। अथवा साध्विदमुच्यते।

१० कुपुत्रो ऽपि भवेत् पुंसां हृदयानन्दकारकः।

दुर्विनीतः कुरूपो ऽपि मूर्खो ऽपि व्यसनी खलः ॥१७॥

एवं च भाषते लोकश्चन्दनं किल शीतलं।

पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥१८॥

सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च।

१५ लोकाः प्रायो न कस्यापि यथा पुत्रस्य बन्धनं ॥१९॥

अथ सा कदाचित् पुत्रं शय्यायां सुस्थितं विधाय जलकुम्भमादाय पतिमुवाच। भो उपाध्याय जलार्थं तडागे यास्यामि। पुत्रो ऽयं भवता नकुलाद्रक्षणीयः। अथ गतायां तस्यां ब्राह्मणो ऽपि गृहं शून्यीकृत्य स्वयमपि क्वचिद्भिक्षार्थं निर्ययौ। अत्रान्तरे कृष्णसर्पो बिलान्निष्क्रम्य

२० दैववशात् तस्य बालकस्य पर्यङ्कान्तिकमागमत्। अथ नकुलस्तं स्वभाववैरिणं गत्वा स्वभ्रातृवधशङ्कयान्तराले सन्निपत्य दुष्टसर्पेण सह सङ्ग्रामं विधाय तं खण्डशः कृत्वा दूरतश्चिक्षेप। ततो निजशौर्यप्रमुदितो रुधिराप्लुतमुखः स्वव्यापारप्रकाशनाय मातुः सम्मुखमाजगाम। मातापि रुधिरक्लिन्नमुखं सुसंरब्धं तमागच्छन्तमवलोक्य। नूनं भक्षितो

२५ ऽनेन दुरात्मना मम दारक इति शङ्कितचित्ता कोपादविमृश्य तस्यो

परि जलपूर्णकुम्भं चिक्षेप। कुम्भपातमात्रगतजीवितं तं नकुलं तत्रै वावगणय्य यावत् स्वगृहमध्यं प्रविशति। तावद्बालकस्तथैव सुप्तस्ति ष्ठति। तत्पर्यङ्कान्तिके च महान्तं कृष्णसर्पं खण्डशः कृतं ददर्श। अथ सोपकारकपुत्रस्यानालोचितकृतबधशोकेन दुःखितहृदयात्मा शिरोवक्षः स्थलादि ताडनमकरोत्। एतस्मिन्नवसरे ब्राह्मणो ऽपि कुतश्चिद्गृही ५ तनिर्वापः परिभ्रम्य यावदागतः पश्यति। तावत् पुत्रशोकाभिभूता ब्राह्मणी विलपति। भो भो लोभात्मन् लोभाभिभूतेन भवता यन्न कृतं ममापि वचनं तदनुभव साम्प्रतं निजदुःकृतवृक्षस्य पुत्रमृत्युदुःख फलं। अथवा भवत्येवैतदतिलोभान्धानां। उक्तं च यतः।

अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत्। १०
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥२०॥

ब्राह्मण आह। कथमेतत्। ब्राह्मणी कथयति। इह कस्मिंश्चि कथा दधिष्ठाने चत्वारो ब्राह्मणाः परस्परं दृढसौहृदाः प्रतिवसन्ति स्म। ॥३॥ ते चातिशयदारिद्र्योपहता मन्त्रयांचक्रिरे। अहो धिगयं दरिद्रभावः। उक्तं च। १५

वरं वनं व्याघ्रगजैः समन्वितं जनेन हीनं बहुकण्टकावृतं।
तृणानि शय्या परिधानवल्कलं न बन्धुमध्ये धनहीनजीवितं ॥२१॥
स्वामी द्वेष्टि सुसेवितो ऽपि सहसा प्रोज्झन्ति सद्बान्धवाः।
द्योतन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः।
भार्या नोत्तमवंशजापि भजते नो यान्ति मित्राणि च। २०
न्यायारोपितविक्रमानपि नरान् येषां न हि स्याद्धनं ॥२२॥
शूरः सुरूपः सुभगश्च वाग्मी शास्त्राणि सर्वाणि विदां करोतु।
अर्थं विना नैव कलाकलापं प्राप्नोति मर्त्यो ऽत्र मनुष्यलोके ॥२३॥

तद्वरं मरणं न च निर्धनत्वं। उक्तं च।

उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम। २५

आसस्तावदहं चिरान्मरणान्तं सेवे त्वदीयं सुखं ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो ।
दारिद्र्यान्मरणं परं सुखमिति ज्ञात्वैव तूष्णीं स्थितः ॥२४॥

तत् सर्वथार्थार्जने यतितव्यं । इति सम्प्रधार्य देशान्तरगमनं च निश्चि
५त्य गृहं सुहृज्जनं च परित्यज्य चत्वारो ऽपि प्रस्थिताः । अथवा सा
धिदमुच्यते ।

सत्यं परित्यजति मुञ्चति बन्धुवर्गं ।
शीघ्रं विहाय जननीमपि जन्मभूमिं ।
सन्त्यज्य गच्छति विदेशमनिष्टलोके ।
१० वित्ताकुलीकृतमतिः पुरुषः किमन्यः ॥२५॥

एवं च क्रमेणावन्तिविषयं प्रापुः । तत्र च सिप्राजले स्नात्वा श्रीमहा
कालदेवं च प्रणम्य यावदग्रतो गच्छन्ति । तावद्भैरवानन्दो नाम यो
गीन्द्रः सम्मुखो बभूव । तं च ब्राह्मणोचितविधिना सम्भाष्य ते सर्वे
तेनैव सह तस्य मठं जग्मुः । अथ ते योगिना पृष्टाः । कुतो भवन्तः
१५समायाताः । क्व यास्यथ । किं प्रयोजनं । ततस्तैरभिहितं । वयं सि
द्धयात्रिकाः । तत्र यास्यामो यत्र धनतृप्तिर्मृत्युर्वा भविष्यतीति । एष
निश्चयः । उक्तं च ।

पतति कदाचिन्नभसः खाते पातालतो ऽपि जलमेति ।
दैवमचिन्त्यं बलवद्बलवान्न तु पुरुषकारो ऽपि ॥२६॥
२० अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ।
दैवमिति यदपि कथयसि पुरुषगुणः सो ऽप्यदृष्टाख्यः ॥२७॥
क्लेशस्याङ्गमदत्वा सुखमेव सुखानि नेह लभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीं ॥२८॥
दुरधिगमः परभागो यावत् पुरुषेण साहसं न कृतं ।
२५ जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥२९॥

तत् कथ्यतामस्माकं कश्चिदर्थार्जनोपायो विवरप्रवेशश्मशानसेवनशा
किनीसाधनमहामांसविक्रयसाधकवर्तिप्रभृतीनामेकतम इति। त्वं चा
त्यद्भुतसिद्धिः श्रूयसे। वयं चातिसाहसिकाः। उक्तं च।

महान्त एव महतामर्थं साधयितुं क्षमाः।
ऋते समुद्रादन्यः को बिभर्ति बडवानलं ॥३०॥ ५

भैरवानन्दो ऽपि तेषां शिष्याणां योग्यतां विज्ञाय सिद्धवर्तिचतुष्टयं
कृत्वा प्रत्येकमर्पयामास। आह च। गम्यतां हिमाचलोत्तरदिग्विभागे।
यत्र यस्य वर्तिः पतिष्यति। तत्र तेनासन्दिग्धं निधिरवाप्यः। तथा
नुष्ठिते तेषां गच्छतामेकतमस्याग्रेसरस्य हस्ताद्वर्तिः क्षितौ निपपात।
अथासौ यावत् तं प्रदेशं खनति। तावत् ताम्रमयी भूमिः। ततस्ते १०
नाभिहितं। अहो गृह्यतां यथेच्छं ताम्रमिदं। अथान्ये प्राहुः। भो
मूढ किमनेन। यत् प्रभूतमपि दारिद्र्यं न नाशयति। तदुत्तिष्ठ। अग्र
तो गच्छामः। सो ऽब्रवीत्। यान्तु भवन्तः। नाहमग्रतः समेष्यामि।
एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः। शेषास्त्रयो
ऽप्यग्रतः प्रस्थिताः। अथ किञ्चिन्मात्रं गतस्याग्रेसरस्य वर्तिर्निपपात। १५
सो ऽपि यावत् खनति। तावद्रूप्यमयी भूमिः। ततः प्रहर्षितः प्रा
ह। भो गृह्यतां यथेच्छं रूप्यं। नाग्रे गन्तव्यमिति। तावूचतुः। भो
मूर्ख पृष्ठतस्ताम्रमयी भूमिः। अत्र रूप्यमयी भूमिः। तन्नूनमग्रतः सुव
र्णमयी भविष्यति। तदनेन प्रभूतेनापि दारिद्र्यनाशो न भविष्यति।
तदावामग्रे यास्यावः। ततः स प्राह। यातां भवन्तौ। नाहमागमि २०
ष्यामि। एवमभिधाय स्वशक्त्या रूप्यं गृहीत्वा गृहं प्रति निवृत्तः।
अथ तयोरपि गच्छतोरेकस्य वर्तिर्निपपात। सो ऽपि यावत् खनति।
तावत् सुवर्णमयी भूमिः। तां दृष्ट्वा प्रहृष्टो द्वितीयमाह। भो गृह्य
तां सुवर्णं यथेच्छं। नातः परं किञ्चिदुत्तममस्ति। सो ऽब्रवीत्।
मूढ किं न वेत्सि। प्राक् ताम्रं ततो रूप्यं ततश्च सुवर्णं प्राप्तं। तन्नू २५

ममतः परं रत्नानि भविष्यन्ति येषामेकतमेनापि दारिद्र्यनाशो भवि
ष्यति। तदुत्तिष्ठ। अग्रतो गच्छावः। किमनेन प्रभूतेनापि भारभूतेन।
सो ऽब्रवीत्। गच्छतु भवान्। अहमत्रैव स्थितस्त्वां प्रतिपालयिष्या
मि। तथानुष्ठिते सो ऽपि गच्छन्नेकाकी ग्रीष्मार्ककिरणसन्तप्तगात्रः
५पिपासाकुलितचित्तः सिद्धभूमिमार्गच्युत इतश्चेतश्च बभ्राम। अथ स
भ्रमन् स्थलोपरि मस्तकोपरिभ्रमच्चक्रं रुधिरक्लिन्नकलेवरं पुरुषमेकमप
श्यत्। ततो द्रुततरं गत्वा तमवोचत। भो को भवान्। किमेवं शि
रसि भ्रमता चक्रेण तिष्ठसि। तत् कथय मे यदि कुत्रचित् पानीयम
स्ति। यतस्तृष्णार्त्तो ऽस्मीति। एवं तस्य वदतस्तच्चक्रं तत्क्षणादेव
१०तन्मस्तकाद्ब्राह्मणशिरसि समारुरोह। सो ऽब्रवीत्। भद्र किमेतत्। स
आह। ममापीत्थमेवैतच्छिरस्यारूढं। स आह। तत् कथय कदैतद
वतरिष्यति। महती मे वेदना वर्तते। स आह। यदा त्वमिव कश्चि
द्धृतसिद्धवर्तिर्हस्त एवमागत्य त्वामालापयिष्यति। तदा तस्य मस्तके
समारोक्ष्यति। सो ऽब्रवीत्। कियान् कालस्तवैवं स्थितस्य सञ्जातः।
१५सो ऽब्रवीत्। साम्प्रतं को राजा धरणीतले। चक्रधर आह। वीणा
वत्सराजः। पुरुष आह। रामो राजा यदासीत् तदाहं दारिद्र्योपहतो
ऽमुं सिद्धवर्तिमादाय त्वमिव समायातः। ततो मयान्यः पुमान् धृतच
क्रमस्तको दृष्टः पृष्टश्च। ततस्तवेव पृच्छत एव ममापि शिरसि तन्म
स्तकाच्चक्रमारुरोह। परं कालसङ्ख्यां न वेद्मि। चक्रधारः प्राह।
२०भद्र कथं तर्हि तवैवं स्थितस्य भोजनजलप्राप्तिरासीत्। पुरुष आह।
भद्र धनदेन निधानहरणभयात् सिद्धानामेतद्भयं प्रदर्शितं येन कश्चि
दपि नात्रागच्छति। अथ कथमपि यदि कश्चिदायाति स क्षुत्पिपासा
निद्रारहितो जरामरणवर्जितः केवलमित्थमेव वेदनामनुभवति। त
दिदानीमाज्ञापय मां स्वगृहाय। मोचितो ऽहं भवता चिरादस्मादन
२५र्थात्। तत् साम्प्रतं स्वस्थानं यास्यामि। इत्युक्त्वा गतः। तस्मिन् गते

कथं मे सहचरश्चिरयतीति तदन्वेषणतत्परस्तत्पदपङ्क्त्यनुसरणेन सुवर्ण
सिद्धः प्रस्थितः। यावत् किञ्चिन्मार्गान्तरमागच्छति। तावत् सरुधिर
प्लावितशरीरं तीक्ष्णचक्रेण मस्तके परिभ्रमता वेदनार्त्तं स्वसहचरं ददर्श।
ततश्च समीपवर्तिना भूत्वा सबाष्पं पृष्टः। भद्र किमेतत्। सो ऽब्र
वीत्। विधिनियोगः। सुवर्णसिद्ध आह। तत् कथय किं तत्। सो ५
ऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत्। तच्छ्रुत्वासौ तं विगर्हमाणः
प्राह। भो निषिद्धस्त्वं मयानेकशो न शृणोषि मे वाक्यं। तत् किं
क्रियते। अतिलोभो न कर्तव्य इति। विद्यावान् कुलीनो ऽपि बुद्धिर
हितः। अथवा साध्विदमुच्यते।

वरं बुद्धिर्न सा विद्या विद्यातो बुद्धिरुत्तमा। १०
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥३१॥

चक्रधरः पृच्छति। कथमेतत्। सुवर्णसिद्धः कथयति। कस्मिंश्चि कथा
दधिष्ठाने चत्वारो ब्राह्मणपुत्राः परं मैत्रीभावमुपागता निवसन्ति स्म। ॥४॥
तेषां त्रयः सर्वशास्त्रपारगाः परं बुद्धिरहिताः। एकस्तु शास्त्रपराङ्मु
खः केवलं बुद्धिमान्। अथ कदाचित् तैर्मिलित्वा मन्त्रितं। को गुणो १५
विद्याया यदि देशान्तरं गत्वा भूपतीन् परितोष्यार्थोपार्जना न क्रियते।
तत् सर्वथा सर्वे देशान्तरं गच्छाम इति। तथानुष्ठिते किञ्चिन्मार्गं
गत्वा तेषां ज्येष्ठतरः प्राह। अहो अस्माकमेकश्चतुर्थो मूढः केवलं
बुद्धिमान्। न च विद्यां विना राज्ञां प्रतिग्रहः केवलबुद्ध्या लभ्यते।
तदस्मै स्वोपार्जनाविभागं न दास्यामः। तदेष निवृत्य स्वगृहं गच्छतु। २०
अथ द्वितीयेनाभिहितं। अहो सुबुद्धे विद्याहीनस्त्वं। तद्गच्छ गृहं।
ततस्तृतीयेणाभिहितं। अहो न युज्यते कर्तुमेवं। यतो वयं बाल्यात्
प्रभृत्येकत्र क्रीडिताः। तदागच्छतु। महानुभावो ऽस्मदुपार्जितस्य वि
त्तस्य संविभागी भवतु। तथानुष्ठिते तैर्मार्गमतिक्रामद्भिरटव्यां मृतसिं
हास्थीनि दृष्टानि। ततश्चैकेनाभिहितं। अहो पूर्वाधीतविद्यायाः २५

प्रत्ययः क्रियते। किञ्चिदेतन्मृतसत्त्वं तिष्ठति। तत् सदभ्यस्तविद्याप्रभा
वेन प्रत्युज्जीवयामः। ततश्चैकेनाभिहितं। अहमस्थिसञ्चयं कर्तुं जा
नामि। द्वितीयेनाभिहितं। चर्ममांसरुधिरं प्रयच्छामि। तृतीयेनाभि
हित। अहं सञ्जीवनं करोमि। तत एकेनास्थिसञ्चयः कृतः। द्विती
५ येन चर्ममांसरुधिरैः संयोजितः। तृतीयो यावज्जीवितव्यं योजयितुं
लग्नः। तावत् स बुद्धिमता निषिद्ध उक्तश्च। एष सिंहः। यद्येनं
सजीवं करिष्यसि। तत् सर्वानप्यस्मान् व्यापादयिष्यतीति। ततस्ते
नाभिहितं। धिङ्मूर्ख नाहं विद्यां विफलतां नेष्यामि। ततश्च तेना
भिहितं। तर्हि क्षणं प्रतीक्षस्व यावदहमेनं समीपतरुमारोहामि।
१० तथानुष्ठिते यावत् सजीवः कृतः। तावत् त्रयो ऽपि ते तेनोत्थाय
व्यापादिताः। स च बुद्धिमान् सिंहे स्थानान्तरे गते वृक्षादवतीर्य
गृहं गतः। अतो ऽहं ब्रवीमि।

वरं बुद्धिर्न सा विद्या विद्यातो बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः॥ ३२॥

१५ अतः परं उक्तं च।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः॥ ३३॥

कथा ॥५॥ चक्रधरः पृच्छति। कथमेतत्। सो ऽब्रवीत्। अथ कस्मिंश्चिदधि
ष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बाल
२० भावे तेषां मतिरजायत। भो देशान्तरं गत्वा विद्याया उपार्जनं क्रियते।
अथान्यस्मिन् दिने ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्याया उपार्ज
नार्थं कान्यकुब्जे गताः। तत्र च विद्यामठे गत्वा पठन्ति। एवं द्वाद
शाब्दानि स्थित्वा यावदेकचित्ततया सर्वे विद्याकुशलाः सञ्जाताः।
ततश्चतुर्भिस्तैर्मिलित्वोक्तं। वयं सर्वे विद्यापारे गताः। तदुपाध्याय
२५ मुत्कलापयित्वा स्वदेशे गच्छाम। तथैवं क्रियतामित्युक्त्वा ब्राह्मणा

उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः।
यावत् किञ्चिन्मार्गं यान्ति। तावद्द्वौ पन्थानौ समायातौ। तत उप
विष्टाः सर्वे। तत्रैकः प्रोवाच। केन मार्गेण गच्छामः। अथ ते पण्डिता
यावन्महाजनमेलापथिकेन सह यान्ति। तावद्रासभः कश्चित् तत्र श्म
शाने तिष्ठति। तैश्चोक्तं। एतत् किं। तावद्द्वितीयः पुस्तकमुद्घाटयि ५
त्वोवाच। यस्तिष्ठति स बान्धवः। तदहो ऽयमस्मदीयो बान्धवः।
ततः कश्चित् तस्य ग्रीवायां लगति। को ऽपि पादौ प्रक्षालयति।
अथ यावद्दिशामवलोकनं ते पण्डिताः कुर्वन्ति तावत् कश्चिदुष्ट्रो दृष्टः।
तैश्चोक्तं। एतत् किं। तावत् तृतीयेन पुस्तकमुद्घाटयित्वोक्तं। धर्मस्य
त्वरिता गतिः। एष धर्मस्तावत्। चतुर्थेनोक्तं। इष्टं धर्मेण योजयेत्। १०
अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। तत् केनचिद्रजकस्याग्रे कथितं।
यावद्रजकस्तेषां पण्डितमूर्खाणां प्रहारकरणाय समायातः। तावत्
ते प्रनष्टाः। अथ यावदग्रे किञ्चित् स्तोकं मार्गं यान्ति तावत् काचि
न्नद्यासादिता। तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैके
नोक्तं। यदागच्छति पत्त्रं। तत् पत्त्रमस्मान् तारयिष्यति। एतत् कथ १५
यित्वा तत्पत्त्रस्योपरि पतितो यावन्नद्या नीयते। तावत् तं नीयमान
मवलोक्यान्येन पण्डितेन केशान्ते गृहीत्वोक्तं।

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेण कुरुते कार्यं सर्वनाशो हि दुःसहः॥ ३४॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः। तथा तैश्च पश्चाद्गत्वा कश्चिद्ग्राम २०
आसादितः। ते ऽपि ग्रामिणैर्निमन्त्रिताः। पृथक् पृथग्गृहेषु नीताः।
तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। ततो विचिन्त्य
शास्त्रं दृष्ट्वा पण्डितेनोक्तं। यद्दीर्घसूत्रो विनश्यति। एवमुक्त्वा भोजनं
परित्यज्य गतः। ततो द्वितीयस्य मण्डका दत्ता। तेनाप्युक्तं। यदतिवि
स्तारविस्तीर्णं तद्भवेन्न चिरायुषं। स च भोजनं त्यक्त्वा गतः। अन्यस्य २५

धार्त्तिकभोजनं दत्तं। तत्रापि पण्डितेनोक्तं। छिद्रेष्वनर्था बहुलीभव
न्ति। एवं ते त्रयो ऽपि पण्डिताः नुत्क्षामकण्ठा लोकैर्हस्यमानास्ततः
स्थानात् स्वदेशं गताः। अतो ऽहं ब्रवीमि।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
५ सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ३५ ॥

तच्छ्रुत्वा चक्रधर आह। अहो अकारणमेतत्। यतो दैवहता बहु
बुद्धयो विनश्यन्ति स्वल्पधियो ऽपि विधिरक्षिता अभिनन्दन्ति।
उक्तं च। शतबुद्धिः शिरस्थो ऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ३६ ॥

कथा ॥ ६ ॥ सुवर्णसिद्ध आह। कथमेतत्। चक्रधरः कथयति। कस्मिंश्चिज्ज
लाशये शतबुद्धिसहस्रबुद्धिनामानौ द्वौ मत्स्यौ प्रतिवसतः स्म। तयो
रेकबुद्धिर्नाम मण्डूको मित्रतामाजगाम। एवं ते त्रयो ऽपि जलतीरे
कियन्तं कालं सुभाषितगोष्ठीसुखमनुभूय पुनर्जलं प्रविशन्ति। अथ तेषां
कदाचिद्गोष्ठीगतानां जालहस्ता धीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके
१५ धृतैरस्तमनवेलायां समायाताः। तं च जलाशयं दृष्ट्वा ते मिथः प्रोचुः।
अहो बहुमत्स्यो ऽयं ह्रदो दृश्यते स्वल्पसलिलश्च। तत् प्रभाते ऽत्रा
गमिष्यामः। इत्युक्त्वा स्वगृहं गताः। ते च तद्वज्रपातसदृशं वचः
श्रुत्वा परस्परं मन्त्रयां चक्रुः। तत्र मण्डूको ऽब्रवीत्। भो भद्रौ शत
बुद्धिसहस्रबुद्धी किमत्र कर्तुं युज्यते। पलायनमवष्टम्भो वा। तच्छ्रुत्वा
२० सहस्रबुद्धिर्विहस्योवाच। भो मित्र मा भैषीर्वचनश्रवणमात्रेणापि।
आगमनमपि तेषां न सम्भाव्यते। भविष्यति वा। तदा स्वबुद्धिप्रभा
वेन त्वामात्मानं च रक्षिष्यामि। यतो ऽहमनेकजलगतीर्जानामि।
तच्छ्रुत्वा शतबुद्धिराह। भो युक्तमुक्तं सहस्रबुद्धिना। अथवा साधि
दमुच्यते।

२५ न यत्रास्ति गतिर्वायो रश्मीनां च विवस्वतः।

तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ३७॥

तथा च। बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं कचिद्यतः।

बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः ॥ ३८॥

तद्वचनश्रवणमात्राज्जन्मस्थानं पितृपर्यायागतं त्यक्तुं न शक्यते। तन्न क्वचिदपि गन्तव्यं। अहं त्वां स्वबुद्धिप्रभावेन रक्षिष्यामि। मण्डूक ५ आह। भद्रौ मम तावदेकैव बुद्धिः पलायनविषया। तदहमन्यं कश्चिज्जलाशयं सभार्यो ऽद्यैव यास्यामि। एवमुक्त्वा मण्डूको रात्रिमासाद्यान्यं जलाशयं गतः। अथान्येद्युस्तैर्यमकिङ्करैर्मत्स्यबन्धिभिः प्रभात आगत्य जालैराच्छादितो ह्रदः। सर्वे ऽपि मत्स्यकूर्ममण्डूककर्कटादयो जलचरा जाले निबद्धा गृहीताः। तौ च शतबुद्धिसहस्रबुद्धी सभार्यौ १० पलायमानौ चिरमात्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तावपि जाले निपतितौ व्यापादितौ च। अथ पराह्णसमये हृष्टास्ते धीवरा गृहं प्रति प्रस्थिताः। शतबुद्धिर्गुरुत्वादेकेन शिरसि धृतः। अपरेण रज्जुबद्धः सहस्रबुद्धिर्नीयते। ततश्च वापीकण्ठोपगतेनैकबुद्धिमण्डूकेनाभिहितं पुरः स्वपत्न्याः। पश्य पश्य प्रिये। १५

शतबुद्धिः शिरस्थो ऽयं लम्बते च सहस्रधीः।

एकबुद्धिरहं भद्रे क्रीडामि विमले जले ॥ ३९॥

अतो ऽहं ब्रवीमि। नैकान्ते बुद्धिरपि प्रमाणमपि। सुवर्णसिद्ध आह। यद्यप्येतदस्ति। तथापि मित्रवचनमनुल्लङ्घनीयं। परं किं क्रियते। मया निवारितो ऽपि न स्थितो ऽतिलौल्याद्विद्याहङ्काराच्च। अथवा सा २० धिदमुच्यते।

साधु मातुल गीतेन मया प्रोक्तो ऽपि न स्थितः।

अपूर्वो ऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणं ॥ ४०॥

चक्रधर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिदधिष्ठाने उद्धतो नाम गर्दभः। स च दिवा रजकगृहे भारोद्वहनं कृत्वा ॥७॥

रात्रौ स्वेच्छया पर्यटति। अथान्यदा तस्य रात्रौ क्षेत्रेषु पर्यटतः कदाचि
च्छृगालेन सार्धं मैत्री बभूव। तौ च वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रेषु
प्रविश्य तत्फलभक्षणं स्वेच्छया कृत्वा प्रत्यूषे स्वस्थानं व्रजतः। अथ
कदाचित् क्षेत्रमध्यस्थितेन मदोद्धतरासभेन शृगालो ऽभिहितः। भो
५ भगिनीसुत पश्य। अतीव निर्मला रजनी। तदहं गीतं करिष्यामि।
तत् कथय कतमेन रागेण करोमि। स प्राह। माम किमनेनानर्थप्र
चालनेन। यतश्चौरकर्मप्रवृत्तावावां। चौरजारैर्निभृतैरेव स्थातव्यमि
ति। उक्तं च।

काशी विवर्जयेच्चौर्यं निद्रालुश्चर्मचौरिकां।
१० जिह्वालौल्यं च रोगाढ्यो जीवितुं यो ऽत्र वाञ्छति ॥४१॥

तथा त्वदीयं गीतं शङ्खवादानुवादि न मधुरमिति। दूरादपि श्रुत्वोत्थाय
क्षेत्ररक्षा बन्धं बधं च विधास्यन्ति। तद्भक्षय तावदमृतरसाश्चिर्भटीः।
मा त्वमत्र गीतव्यापारपरो भव। तच्छ्रुत्वा रासभ आह। भो वनाश्र
यत्वात् त्वं गीतरसं न वेत्सि। तेनैतद्ब्रवीषि। उक्तं च।

१५ शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा ॥४२॥

शृगाल आह। माम अस्त्येतत्। परं कठोरमुन्नदसि। तत् किं तेन
नादेन स्वार्थभ्रंशिना। रासभ आह। धिग्धिग्मूर्ख किमहं गीतं न
जानामि। तच्छ्रूयतां तस्य भेदस्तद्यथा।

२० सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः।
ताला एकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥४३॥
स्थानत्रयं यतीनां च षडास्यानि रसा नव।
वर्णाः षड्विंशतिर्भावाश्चत्वारिंशत् ततः स्मृताः ॥४४॥
पञ्चाशीत्यधिकं ह्येतद्गीतानां च शतं स्मृतं।
२५ सुवर्णरचितं शुद्धं गीताङ्गैः सकलैर्युतं ॥४५॥

नान्यद्गीतात् प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुस्वराह्लादात् त्र्यक्षं जग्राह रावणः ॥ ४६ ॥

तत् कथं भगिनीसुत मामनभिज्ञं वदसि निवारयसि च। शृगाल आह। माम यद्येवं तदहं वृतिद्वारदेशस्थः क्षेत्रपालमवलोकयामि। त्वं पुनः स्वेच्छया गीतं कुरु। तथानुष्ठिते गर्दभ उत्कन्धरं भूत्वा श ५ब्दयितुमारब्धः। ततः क्षेत्रपालो रासभशब्दितं श्रुत्वा क्रोधाद्दन्तान् दन्तैर्निपीडयंल्लगुडमुद्यम्य प्रधावितः। यावद्रासभो दृष्टः। तावल्लगुड प्रहारैस्तथा हतो यथा प्रताडितो भूपृष्ठे पतितः। ततश्च सच्छिद्रोलूखलं गले बद्ध्वा क्षेत्रपालः सुप्तः। रासभो ऽपि जातिस्वभावाद्गतवेदनः क्षणेनाभ्युत्थितः। उक्तं च। १०

सारमेयखराश्वानां गर्दभस्य विशेषतः।
मुहूर्तात् परतो न स्यात् प्रहारजनिता व्यथा ॥ ४७ ॥

ततश्च तदेवोलूखलमादाय वृतिं चूर्णयित्वा पलायितुमारब्धः। एतस्मिन्नन्तरे शृगालो दूरादेव तं दृष्ट्वा सस्मितमिदमाह।

साधु मातुल गीतेन मया प्रोक्तो ऽपि न स्थितः। १५
अपूर्वो ऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणं ॥ ४८ ॥

तद्भवानपि निवार्यमाणो ऽपि मया न स्थितः। तच्छ्रुत्वा चक्रधर आह। भो मित्र सत्यमेतत्। अथवा साध्विदमुच्यते।

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ४९ ॥ २०

सुवर्णसिद्ध आह। कथमेतत्। चक्रधरः कथयति। अस्ति कस्मिं कथा श्चिदधिष्ठाने मन्थरको नाम कौलिकः। तस्य कदाचित् पटकर्माणि ॥ ८ ॥ कुर्वतः सर्वाणि पटकर्मकरकाष्ठानि भग्नानि। ततः स कुठारमादाय काष्ठार्थं परिभ्रमन् समुद्रतटं प्राप। तत्र च महान्तं शिंशपापादपं दृष्ट्वा चिन्तितवान्। महानयं वृक्षो दृश्यते। तदनेन कर्तितेन प्रभू २५

तानि पटकर्मोपकरणानि भविष्यन्ति। इत्यवधार्य तस्योपरि कुठारमु
द्यतवान्। अथ तत्र वृक्षे कश्चिद्व्यन्तर आसीत्। तेनाभिहितं। भो
ममाश्रयो ऽयं पादपः। तत् सर्वथा रक्षणीयः। यतो ऽहमिह समुद्र
कल्लोलसंस्पर्शशीतलानिलस्पृश्यमानशरीरः परमसुखेन तिष्ठामि। कौ
५ लिक आह। भो तदहं किं करोमि। दारुसामग्रीं विना बुभुक्षया
पीड्यते मत्कुटुम्बमिति। तस्मादन्यत्र शीघ्रं गम्यतां। अहमेनं कर्ति
ष्यामि। व्यन्तरो ऽब्रवीत्। भो तुष्टस्तवाहं प्रार्थ्यतां किञ्चिदभीष्टं।
रक्ष पादपममुमिति। कौलिक आह। यद्येवं तर्हि स्वगृहं गत्वा
स्वमित्रं पत्नीं च पृष्ट्वा समागच्छामि। ततस्त्वया देयं। अथ तथेति
१० व्यन्तरेण प्रतिपन्ने कौलिकः प्रहृष्टः स्वगृहं प्रति निवृत्तो यावदधि
ष्ठाने प्रविशति। तावन्निजसुहृदं नापितमपश्यत्। आह च। अहो
मित्र मम कश्चिद्व्यन्तरः सिद्धः। तत् कथय किं प्रार्थये। नापित आह।
भद्र यद्येवं तद्राज्यं प्रार्थयस्व। येन त्वं राजाहं तव मन्त्री द्वावपीह
लोके सुखमनुभूय परलोकसुखमनुभवावः। उक्तं च।

१५ राजा दानपरो नित्यमिह कीर्तिमवाप्य च।
तत्प्रभावात् पुनः स्वर्गे स्पर्धते त्रिदशैः सह ॥ ५० ॥

कौलिक आह। भो मित्र भवत्वेवं। परं पत्नीमपि पृच्छामि। नापित
आह। न हि स्त्रीभिः सह मन्त्रयितुं युज्यते। उक्तं च।

भोजनाच्छादनं दद्यादनुकालं विशेषतः।
२० भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत् सुधीः ॥ ५१ ॥

तथा च। यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता।
तद्गृहं क्षयमायाति भार्गवो हीदमब्रवीत् ॥ ५२ ॥

किञ्च। तावदेव प्रधानं स्यात् तावद्गुरुजने रतः।
पुरुषो योषितां यावन्न शृणोति रहो वचः ॥ ५३ ॥

२५ एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः।

न तासां वल्लभो यस्मात् स्वसुतो ऽपि सुखं विना॥५४॥

कौलिक आह। यद्यप्येवं तथापि पतिव्रता सा प्रष्टव्या। एवं तमभिधाय सत्वरं गत्वा पत्नीमुवाच। भद्रे ऽद्यास्माकं कश्चिद्व्यन्तरः सिद्धः। स वाञ्छितं प्रयच्छति। तदहं त्वां प्रष्टुमागतः। तत् कथय किमर्थये। एष तावन्मम सुहृन्नापितो राज्यं प्रार्थ्यतामिति वदति। साब्रवीत्। ५ आर्यपुत्र का मतिर्नापितानां। तन्न कार्यं तद्वचः। उक्तं च।

चारणैर्वन्दिभिर्नीचैर्नापितैर्मालिकैरपि।
न मन्त्रं मतिमान् कुर्यात् सार्धं भिक्षुभिरेव च॥५५॥

अपरञ्चातिक्लेशपरम्परैषा राज्यस्थितिः सन्धिविग्रहयानासनसंश्रयद्वैधीभावादिचिन्ता। पुरुषस्य न कदाचिदपि सुखं प्रयच्छति। यतः १०

यदैव राज्ये क्रियते ऽभिलाषः सदैव याति व्यसनेषु बुद्धिः।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति॥५६॥

यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः।
बधं राज्यकृते राज्ञां तद्राज्यं दूरतस्त्यजेत्॥५७॥

कौलिक आह। सत्यमुक्तं भवत्या। तत् किं याचे। साब्रवीत्। त्वं १५ तावदेकं पटं नित्यमेव निष्पादयसि। तेन सर्वव्ययशुद्धिः सम्पद्यते। अथेदानीमात्मनो ऽन्यद्बाहुयुगलं द्वितीयं शिरश्च याचस्व। येन पुरतः पृष्ठतश्चैकैकं पटं सम्पादयसि। तत्रैकस्य मूल्येन गृहव्ययः। द्वितीयस्य मूल्येन शेषकृत्यानि कुर्वाणस्य ज्ञातिमध्ये श्लाघ्यमानस्य कालो गच्छति। लोकद्वयस्योपार्जना भविष्यति। सो ऽपि तदाकर्ण्य प्रहृष्टः प्राह। २० साधु पतिव्रते। साधूक्तं भवत्या। तदेवं करिष्यामि। एष मे निश्चयः। अथ कौलिको व्यन्तरं गत्वा प्रार्थयां चक्रे। भो यदि मे वाञ्छितं प्रयच्छसि। तदेहि मे द्वितीयं बाहुयुगलं शिरश्च। एवमभिहिते तत्क्षणादेव द्विशिराश्चतुर्बाहुश्च सञ्जातः। ततश्च प्रहृष्टमना यावद्गृहमागच्छति। तावल्लोकै राक्षसो ऽयमिति मन्यमानैर्लगुडपाषाणादिभिस्ताडितो २५

मृतश्च। अतो ऽहं ब्रवीमि।

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः।
स एव निधनं याति यथा मन्थरकौलिकः ॥५८॥

चक्रधरः पुनरेवाह। सर्वो ऽपि जनो ऽश्रद्धेयामाशापिशाचिकां प्राप्य
५ हास्यपदवीं याति। अथवा साध्विदमुच्यते।

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥५९॥

कथा ॥१॥ सुवर्णसिद्ध आह। कथमेतत्। सो ऽब्रवीत्। कस्मिंश्चिदधिष्ठाने स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितैः
१० सक्तुभिः भुक्तशेषैः कलशः सम्पूरितः। तं च कलशं नागदन्ते ऽवलम्ब्य तस्याधस्तात् खट्वां निधाय सततमेकदृष्ट्या तमवलोकयन् रात्रौ चिन्तयामास। सक्तुभिः परिपूर्णो ऽयं तावद्घटो वर्तते। तद्यदि दुर्भिक्षं भविष्यति तदा रूपकाणां शतमस्मिन्नुत्पत्स्यते। ततश्च तेनाजाद्वयमहं ग्रहीष्ये। ततः षण्मासिकप्रसववशादजायूथं भविष्यति। ततो ऽजा
१५ भिर्गावः। गवां प्रसवात् तदपत्यविक्रयं करिष्यामि। ततो गोभिर्महिष्यः। महिषीभिर्वडवाः। वडवाप्रसवतो मम प्रभूता अश्वा भविष्यन्ति। तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं गृहं सम्पत्स्यते। ततश्च कश्चिद्ब्राह्मणो मम गृहमभ्येत्य प्राप्तवरां रूपाढ्यां कन्यां प्रदास्यति। तस्याः पुत्रो जनिष्यते। तस्याहं सोमशर्मेति
२० नाम करिष्यामि। ततस्तस्मिन् जानुचलनयोग्ये सञ्जाते ऽहं पुस्तकं गृहीत्वाश्वचलनशालायाः पृष्ठदेशे समुपविश्य तदवधारयिष्यामि। एतस्मिन्नन्तरे सोमशर्मा मां दृष्ट्वा जनन्या उत्सङ्गाज्जानुप्रचलनपरो ऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति। ततो ऽहं ब्राह्मणीं कोपाविष्टो ऽभिधास्यामि। गृह्यतां गृह्यतां बालकः। सापि गृहकर्मव्य
२५ ग्रतयास्मद्वचनं न श्रोष्यति। ततो ऽहं समुत्थाय तां पादप्रहारेण

ताडयिष्यामि। एवं तेन तद्ध्यानावस्थितेन पादप्रहारस्तथा मुक्तो यथा स घटो भग्नः। घटान्तर्वर्तिभिः सक्तुभिश्च पाण्डुरतां गतः। अतो ऽहं ब्रवीमि।

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥६०॥ ५

सुवर्णसिद्ध आह। एवमेवैतत्। यतः

यो लौल्यात् कुरुते कर्म नैवानर्थमपेक्षते।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥६१॥

चक्रधर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चिन्नगरे कथा चन्द्रो नाम भूपतिः। तत्पुत्रक्रीडार्थं वानरयूथं तिष्ठति। ते नित्यमे ॥१० वानेकभोजनभक्ष्यादिभिः पुष्टिं नीयन्ते। अथ वानरयूथाधिपो यः स औशनसबार्हस्पत्यचाणक्यमतवित्तदनुष्ठाता च तान् सर्वानप्यध्या पयति स्म। तस्मिन् राजगृहे लघुकुमारवाहनयोग्यं मेषयूथं तिष्ठति। तन्मध्यादेको जिह्वालौल्यादहर्निशं महानसे निःशङ्कः प्रविश्य यत् किञ्चित् पश्यति तत् सर्वं भक्षयति। तं च सूपकारा यत् किञ्चित् १५ काष्ठपाषाणमग्रे पश्यन्ति तेन ताडयन्ति। सो ऽपि वानरयूथपस्तं दृष्ट्वा व्यचिन्तयत्। अहो मेषसूपकारकलहो ऽयं वानराणां क्षयाय भविष्य ति। यतो ऽन्नस्वादलम्पटो ऽयं मेषो महाकोपाश्च सूपकारा यथास्था नासन्नेन वस्तुना प्रहरन्ति। तद्यदि वस्त्वन्तराभावात् कदाचिदुल्मुकेन ताडयिष्यन्ति। तदूर्णाप्रचुरो ऽयं मेषः स्वल्पेनापि वह्निना प्रज्वलि २० ष्यति। तद्दह्यमानः पुनरश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति। सापि तृणप्राचुर्यात् ज्वलिष्यतीति। ततो ऽश्वा वह्निदाहमवाप्स्यन्ति। शा लिहोत्रेण पुनरेतदुक्तं। यद्वानरवसयाश्वानां वह्निदाहदोषः प्रशाम्यति। तन्नूनमस्माकमुपस्थितो मृत्युरिति। एवं निश्चित्य सर्वान् वानराना हूय रहसि प्रोवाच।

मेषेण सूपकाराणां कलहो यत्र वर्तते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः ॥६२॥
तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः।
तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ॥६३॥
५तथा च। कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदं।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणां ॥६४॥

तन्न यावत् सर्वेषां क्षयो भवति। तावदेतद्राजगृहं परित्यज्य वनं गच्छामः। अथ तस्य तद्वचनमश्रद्धेयं श्रुत्वा ते मदोद्धता वानरा विहस्य तमूचुः। भो वृद्धभावाद्भवतो बुद्धिवैकल्यं सञ्जातं येनैतद्ब्रवीषि।
१०न वयं राजपुत्रैः स्वहस्तप्रदत्तानमृतकल्पान् भक्ष्यविशेषान् परित्यज्य तत्राटव्यां कषायकटुतिक्ताम्लक्षाराणि वनफलानि भक्षयिष्यामः। तच्छ्रुत्वाश्रुकलुषां दृष्टिं कृत्वा यूथपः प्रोवाच। रे रे मूर्खा यूयं। नैतस्य सुखस्य परिणामं जानीथ। यस्मादापातमात्रमधुरमेतत् सुखं परिणामे विषवद्भविष्यति। तदहं कुलक्षयं स्वयं नावलोकयिष्यामि। साम्प्रतं
१५तदेव वनं यास्यामि। उक्तं चः।

धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयं।
परहस्तगतां भार्यां मित्रं च विषमस्थितं ॥६५॥

इत्येवमभिधाय सर्वान् परित्यज्य स यूथपो ऽटव्यां गतः। अथ तस्मिन् गते ऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टः। यावदेनं ताडनाय
२०सूपकारेण नान्यत् किञ्चिदासादितं। तावदर्धज्वलितकाष्ठेन ताडितः। सो ऽपि तेन ताडितः सन्नर्धज्वलितशरीरः शब्दायमानः प्रत्यासन्नवर्तिन्यामश्वकुट्यां प्रविष्टः। तत्र च तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वतो ऽपि वह्निज्वालाः समुत्थिताः। कुट्यां च निबद्धा घोटकाः केचित् स्फुटितनयनाः पञ्चत्वं गताः। केचिच्च बन्धनानि त्रोटयित्वार्ध
२५दग्धशरीरा हेषायमाणा इतश्चेतश्च धावमानाः सर्वमपि जनं व्याकुली

चक्रुः। एतस्मिन्नन्तरे राज्ञा सविषादं शालिहोत्रज्ञान् चिकित्सकाना
हूय प्रोवाच। भो भो प्रोच्यतामश्वानामेतेषां कश्चिद्दाहोपशमोपायः।
ते ऽपि शास्त्राणि सञ्चिन्त्य प्रोचुः। देव प्रोक्तमत्र विषये भगवता
शालिहोत्रेण।

कपीनां वसयाश्वानां वह्निदाहसमुद्भवा। ५
व्यथा विनाशमभ्येति तमः सूर्योदये यथा ॥ ६६ ॥

तत् क्रियतामेतच्चिकित्सितं द्राग्यावद्रोगेन ते न विनश्यन्ति। सो
ऽपि राजा तच्छ्रुत्वा वानरबधमादिष्टवान्। किं बहुना सर्वे ते व्या
पादिता इति। अथ सो ऽपि वानरयूथपस्तां कुलधर्षणां ज्ञात्वा परं
विषादमुपगतः। तदनुसारे त्यक्ताहारविहारक्रियो वनाद्वनान्तरं पर्य १०
टति। अचिन्तयच्च। कथमहं तस्य नृपपापस्यानृण्यताकृत्येनापकृत्यं
करिष्यामि। उक्तं च।

धर्षणां मर्षयेद्यो ऽत्र वंशजापरनिर्मितां।
भयाद्वा यदि वा लोभात् स ज्ञेयः पुरुषाधमः ॥ ६७ ॥

अथ तेन वृद्धवानरेण कुत्रचित् पिपासाकुलितेन भ्रमता पद्मिनीख १५
ण्डमण्डितं सरः समासादितं। तत्र च यावन्निपुणतयावलोकयति।
तावद्वनचरमनुष्याणां प्रविशदेव पदं पश्यति न च निर्गच्छदिति।
ततश्चिन्तयामास। नूनमत्रान्तर्जले दुष्टग्राहेण भाव्यं। तत् पद्मिनीना
लमादाय दूरस्थो ऽपि जलपानं करोमि। तथानुष्ठिते तन्मध्याद्रत्नमा
लालङ्कृतकण्ठो राक्षसो निष्क्रम्य तमुवाच। यो ऽत्र सलिले प्रविशति २०
तं भक्षयामीति। तन्नास्ति धूर्ततरस्त्वदन्यो यो ऽनेन विधिना पिबसि।
तत् तुष्टो ऽहं प्रार्थयस्व हृदयवाञ्छितं। कपिराह। भोः कियती
भक्षणशक्तिस्ते। स आह। शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि
भक्षयामि। वाह्यतः शृगालो ऽपि मां धर्षयति। वानरः प्राह।
अस्ति मे भूपतिना सहात्यन्तं वैरं। यद्येनां रत्नमालां मे प्रयच्छसि २५

तत् सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्रैव सरसि प्रवे शयामि। अथ राक्षसः श्रद्धेयवचनं तस्य तच्छ्रुत्वा तस्मै रत्नमालां समर्पयामास। वानरो ऽपि रत्नमालाविभूषितकण्ठो तन्नगरमासाद्य वृक्षप्रासादेषु परिभ्रमन् जनैर्दृष्टः पृष्टश्च। भो यूथप क्व भवानियन्तं कालं
५ गत्वा स्थितः। क्व भवतेदृग्रत्नमाला लब्धा या दीप्त्या सूर्यमपि तिरस्कुरुते। वानरः प्राह। अस्ति कुत्रचिदरण्ये धनदविनिर्मितं सुगुप्ततरं सरः। तत्रार्धोदितसूर्यवारे यः कश्चित् प्रविश्य निमज्जति स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निष्क्रमति। अथ भूभुजा जनात् तदाकर्ण्य स वानरः समाहूतः पृष्टश्च। भो यूथप ते सत्यमेतत्। रत्न
१० मालासनाथं सरो ऽस्ति क्वापि। कपिराह। स्वामिन्नेष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते। यदि तवापि रत्नमालाभिः प्रयोजनं। तन्मया सह कमपि प्रेषय येनाहं तच्चित्रं दर्शयामि। एतच्छ्रुत्वा नृपतिः प्राह। यद्येवं तदहं सपरिजनः स्वयमेष्यामि यथा प्रभूता रत्नमालाः सम्पद्यन्ते। वानर आह। स्वामिन्नेतदेव चारु।
१५ अथ भूपतिः सपरिजनो रत्नमालालोभात् प्रस्थितः। वानरो ऽपि राज्ञा दोलारूढेन स्वोत्सङ्गमारोपितः सुखेन प्रतिपत्तिपूर्वं गच्छति। अथवा साध्विदमुच्यते।

लोभादेव नरा मूढा धनविद्यान्विता अपि।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥६८॥

२० तथा च। इच्छति शती सहस्रं सहस्री लक्षमीहते।
लक्षाधिपस्ततो राज्यं राज्याच्च स्वर्गमीहते ॥६९॥

अथ प्रत्यूषे तत् सरः समासाद्य वानरो राजानमुवाच। देवात्रार्धोदिते सूर्ये प्रविष्टानां सिद्धिर्भवतीति। तत् सर्वो ऽपि परिजनो वाच्यो येनैकहेलया प्रविशति। त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थान
२५ माश्रित्य प्रभूतास्ते रत्नमाला दर्शयामि। अथ प्रविष्टास्ते सर्वे लोका

भक्षिताश्च तेन राक्षसेन। अथ चिरायमाणेषु तेषु राजा वानरमुवाच। भो यूथाधिप किमिति चिरयति मे परिजनः। तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच। भो दुष्ट नरपते राक्षसेनान्तःसलिलस्थेन भक्षितस्ते परिजनः। साधितं मया कुलक्षयकारणोत्थं वैरं भवता सह। तद्गम्यतां। मया त्वं स्वामीति गत्वा नात्र प्रवेशितः। उक्तं च यतः। ५

कृते प्रतिकृतं कुर्याद्धिंसिते प्रतिहिंसितं।
तत्र दोषं न पश्यामि यो दुष्टे दुष्टमाचरेत् ॥७०॥

तत् त्वया मत्कुलक्षयो निर्मितो मया पुनस्तवेति। एतदाकर्ण्य राजा शोकाविष्टस्त्वरितपदं यथायातं प्रतिनिवृत्त इति। अथ तस्मिन् भूपतौ गते राक्षसः सुतृप्तो जलान्निष्क्रम्य सानन्दमिदमाह। १०

हृतः शत्रुः कृतं मित्रं रत्नमाला न हारिता।
नालेन पिबता तोयं भवता साधु वानर ॥७१॥

अतोऽहं ब्रवीमि।

यो लौल्यात् कुरुते कर्म नैवानर्थमपेक्षते।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥७२॥ १५

सुवर्णसिद्धः पुनरप्याह। भो भो प्रेषय मां येन स्वगृहं गच्छामि। चक्रधरः प्राह। आपदर्थे धनमित्रसङ्ग्रहः क्रियते। तत् कथं मामेतदवस्थं त्यक्त्वा यास्यसि। उक्तं च।

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां वहन्।
कृतघ्नस्तेन पापेन नरके गच्छति ध्रुवं ॥७३॥ २०

सुवर्णसिद्धः प्राह। भो सत्यमेतद्यदि गम्यस्थाने शक्तियुक्तस्त्यजति। एतत् पुनर्मनुष्याणामगम्यस्थानं। नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः। अपरं यथा यथा तव चक्रभ्रमणवेदनया मुखविकारं पश्यामि। तथा तथा जानामि। यदि द्रागितः स्थानाद्गच्छामि। मा कथञ्चिदस्माकमप्यनर्थोऽयं भविष्यतीति। अथवा साध्विदमुच्यते। २५

यादृशी वदनछाया दृश्यते तव वानर।
गृहीतो ऽसि विकालेन यः परैति स जीवति ॥७४॥

कथा ॥११॥ चक्रधर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित् पुरे भद्रसेनो नाम राजा। तस्य सर्वलक्षणसम्पूर्णा रत्नवती नाम ५ कन्यास्ति। तां च कश्चिद्राक्षसो हर्तुमिच्छति। रात्रावागत्य नित्यमेवोपभुंक्ते। परं कृताङ्गरक्षापरिवेशां तां हर्तुं न शक्नोति। सा च तत्सुरतसमये राक्षससान्निध्यजामवस्थां कम्पज्वरादिभिरनुभवति। एवमतिक्रमति काले कदाचित् स राक्षसो गृहकोणे स्थितो राजदुहितुरात्मानमदर्शयत्। ततः सा स्वसखीमुवाच। सखि पश्य विकालसमये १० राक्षसो ऽयं नित्यमेवागत्य मां कदर्थयति। तदस्ति किञ्चिदस्य दुरात्मनः प्रतिषेधविधानं। तच्छ्रुत्वा राक्षसो व्यचिन्तयत्। नूनं यथाहं तथान्यः कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति। परं सो ऽप्येनां हर्तुं न शक्नोति। तत् तावदहमश्वमध्यस्थो निरीक्षे किंरूपः किम्प्रभावश्च स इति। तथानुष्ठिते निशीथसमये राज्ञो गृहे कश्चिदश्वापहा- १५ रकः प्रविष्टः। स च सर्वानश्वानवलोक्य तं राक्षसाश्वं शुभतरं दृष्ट्वा खलीनं तन्मुखे निधाय समारूढः। एतस्मिन्नन्तरे राक्षसश्चिन्तयामास नूनं स एष विकालनामा मां दुष्टं मत्वा कोपान्निहन्तुमभ्यागतः। तत् किं करोमि। एवं चिन्तयन् सो ऽश्वापहारकेण कशाघातेन ताडितः अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः। चौरो ऽपि दूरं गत्वा खली- २० नाकर्षणेन तं स्थिरीकर्तुमारेभे। तद्यदि वाजी भवति तदा खलीनं गणयति। स तु केवलं वेगाद्वेगं गच्छति। अथ तथावगणितखलीनाकर्षणमवलोक्य चौरश्चिन्तयामास। अहो नैवंविधा वाजिनो भवन्ति। तन्नूनमेतेनाश्वरूपेण राक्षसेन भाव्यं। तद्यदि कञ्चित् पांशुलं भूतलमवलोकयामि। तत्रात्मानं पातयामि। नान्यथा मे जीवितव्य- २५ मस्ति। इत्येवं चिन्तयत इष्टदेवतामनुस्मरतो ऽश्वापहारकस्य सो ऽश्व

ह्मपराक्षसो वटवृक्षतले गतः। चौरो ऽपि वटप्ररोहमासाद्य तत्रैव विलग्नः। ततश्च द्वावपि तौ पृथग्भूतौ लब्धजीविताशौ परमानन्द निर्भरौ बभूवतुः। अथ तत्र वटे राक्षससुहृत् कश्चिद्वानर आसीत्। तेन नश्यन्तं राक्षसमवलोक्य व्याहृतं। भो किमेवमलीकभयेन प्रण श्यसि। भक्ष्यो ऽयं ते मानुषः। तद्भक्ष्यतां। स तस्य वचनं श्रुत्वा स्व ५ रूपमाधाय शङ्कितमनाः स्खलितगतिनिवृत्तः। अथ चौरस्तं वानरा हूतं ज्ञात्वा कोपादुपर्युपरि वानरस्य लम्बमानं लाङ्गूलं मुखे निधाय गाढतरं चर्वितुमारब्धवान्। वानरो ऽपि तं राक्षसादप्याधिकं मन्य मानो भयान्न किञ्चिदुक्तवान्। केवलं व्यथार्त्तो निमीलितनयनो दन्तान्निपीडयन् तिष्ठति। राक्षसो ऽपि तं तथाभूतमवलोक्य श्लोक १० मेनमपठत्।

यादृशी वदनच्छाया दृश्यते तव वानर।
गृहीतो ऽसि विकालेन यः परैति स जीवति ॥ ७५ ॥

सुवर्णसिद्धः पुनरप्याह। प्रेषय मां। स्वगृहमनुगच्छामि। त्वं पुनरत्र स्थितो दुर्विनयवृक्षफलमनुभुंक्ष्व। चक्रधर आह। भो ऽकारणमेतत्। १५ नयो ऽनयो वा ज्ञायते। यतो दैववशाच्छुभाशुभं नृणामुपतिष्ठते। उक्तं च।

दुर्गस्त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तं।
शास्त्रं च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः ॥७६॥

तथा च। अन्धकः कुब्जकश्चैव राजकन्या च त्रिस्तनी। २०
त्रयो ऽप्यन्यायतः सिद्धाः सन्मुखे कर्मणि स्थिते ॥७७॥

सुवर्णसिद्ध आह। कथमेतत्। चक्रधर आह। अस्त्युत्तरापथे कथा मधुपुरं नाम नगरं। तत्र मधुसेनो नाम राजा बभूव। तस्य कदाचित् ॥१२ त्रिस्तनी कन्या जज्ञे। अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चु किनमाहूय प्रोवाच। भो त्यज्यतामियमरण्ये यथा न कश्चिदेव जानाति २५

ति। तच्छ्रुत्वा कञ्चुकी प्राह। महाराज श्रूयतां एतद्यदनिष्टकारिणी त्रिस्तनी भवति कन्या। तथापि ब्राह्मणा आहूय ते प्रष्टव्याः। येन लोकद्वये ऽपि विरुद्धता न भवति। उक्तं च यतः।

यः सततं परिपृच्छति शृणोति सन्धारयत्यनिशं।
५ तस्य दिवाकरकिरणैर्नलिनीव विवर्धते बुद्धिः ॥७८॥

तथा च। पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
राक्षसेन गृहीतो ऽपि प्रश्नान्मुक्तो द्विजः पुरा ॥७९॥

कथा ॥१३॥ राजाह। कथमेतत्। कञ्चुकी कथयति। अस्ति कुत्रचिदरण्ये चण्डकर्मा नाम राक्षसः। एकदा तेन भ्रमता कश्चिद्ब्राह्मणः समासादितः। १० ततस्तस्य स्कन्धमारुह्य प्रोवाच। भो ऽग्रे गम्यतां। ब्राह्मणो ऽपि भयत्रस्तमनास्तमादाय प्रस्थितः। अथ तस्य कमलोदरसुन्दरौ पादौ दृष्ट्वा तमपृच्छत्। भो कथमेवंविधौ भवतः कोमलौ पादौ। राक्षस आह। नाहमनुद्धतपद्भ्यां कदाचिदपि भूमिं स्पृशामीति। मे व्रतमस्ति। तच्छ्रुत्वा ब्राह्मणो ऽप्यात्मनो मोक्षोपायं चिन्तयन् महत् सरः १५ प्राप्तः। ततो राक्षसेनाभिहितं। भो यावदहं स्नानं कृत्वा देवतार्चनं विधाय सरसो निःसरामि। तावत् त्वया नातः स्थानात् क्वापि गन्तव्यं। तथानुष्ठिते ब्राह्मणश्चिन्तयामास। नूनं देवतार्चनविधेरूर्ध्वं मामेष भक्षयिष्यति। तद्द्रुततरं गच्छामि। यतो नायमनुद्धतपादो मे पृष्ठतः समेष्यतीति। तथानुष्ठिते राक्षसो व्रतभङ्गभयात् तत्पृष्ठतो न गतः। २० अतो ऽहं ब्रवीमि।

पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
राक्षसेन गृहीतो ऽपि प्रश्नान्मुक्तो द्विजः पुरा ॥८०॥

अथ तस्य वचनं श्रुत्वा राजा ब्राह्मणानाहूय प्रोवाच। भो ब्राह्मणाः त्रिस्तनी मे कन्या जाता। तत् किमेतस्याः प्रतिविधानमस्ति। किं २५ वा न। ते प्रोचुः। देव श्रूयतां।

हीनाङ्गी वाधिकाङ्गी वा या भवेत् कन्यकात्र सा ।
भर्तुश्च स्याद्विनाशाय स्वशीलनिधनाय च ॥८१॥
या पुनस्त्रिस्तनी कन्या याति लोचनगोचरं ।
पितरं नाशयत्येव सा द्रुतं नात्र संशयः ॥८२॥

तस्मादेतद्दर्शनं परिहरतु देवः । यदि कश्चिदेनामुद्वाहयति । तत् तस्मै ५ दत्त्वा देशत्यागेन नियोजितव्य इति । एवं कृते लोकद्वयाविरुद्धता कृता भवतीति । तेषां तद्वचनमाकर्ण्य राजा सर्वत्र पटहशब्देन घोषणामा ज्ञापयामास । अहो त्रिस्तनीं राजकन्यां यः परिणयति । तस्य राजा सुवर्णलक्षं दत्त्वा देशत्यागं कारयति । एवमाघोषणायां क्रियमाणायां प्रभूतः कालो व्यतीतः । न च कश्चित् तां परिणयति । सापि गुप्त १० स्थाने संस्थिता यौवनाभिमुखी सञ्जज्ञे । अथ तत्रैव नगरे कश्चिदन्धो ऽस्ति । तस्य च मन्थरकनामा कुब्जो ऽग्रेसरयष्टिग्राहको । ततस्तौ प टहशब्दमाकर्ण्य मिथो मन्त्रयेते । स्पृश्यते ऽसौ पटहः । यदि कथमपि दैवात् कन्यका सुवर्णं च लभ्यते । सुवर्णं प्राप्य सुखेन कालो व्रजति । अथ यदि कन्यकादोषेण मृत्युर्भवति । तदस्य दारिद्र्योत्थस्य क्लेशस्य १५ पर्यन्तो भवति । उक्तं च यतः ।

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः ।
कान्तासङ्गः स्वजनसमता दुःखहानिर्विलासः ।
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता ।
पूर्णे सर्वे जठरपिठरे प्राणिनां सम्भवन्ति ॥८३॥ २०

एवं मन्त्रयित्वान्धेन गत्वा पटहः स्पृष्टः । आह च । अहं तां कन्यां परिणेष्यामि यदि मे राजा प्रयच्छति । ततस्तै राजपुरुषैर्गत्वा राज्ञे नि वेदितं । देव केनचिदन्धेन पटहः स्पृष्टः । तदत्र विषये देवः प्रमाणं । राजा प्राह । भो

अन्धो वा बधिरो वापि कुष्ठी वाप्यन्त्यजो ऽपि वा । २५

परिगृह्णातु तां कन्यां सलग्नां स्याद्विदेशगः ॥ ८४॥

अथ राजादेशानन्तरमेव तैः राजपुरुषैस्तां नदीतीरे नीत्वा सुवर्णलक्षं दत्वा त्रिस्तनी तेनान्धेन सह विवाहिता। ततो यानपात्रमारोप्य कैवर्ताः प्रोक्ताः। भो देशान्तरं नीत्वा क्वचिदधिष्ठाने सकुब्जपत्नीको ५ ऽयमन्धो मोचनीयः। तथानुष्ठिते विदेशमासाद्य क्वचिदधिष्ठाने त्रयो ऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म। केवलमन्धः पर्यङ्के सदा सुप्तस्तिष्ठति। गृहव्यापारं कुब्जः करोति। एवं गच्छति काले त्रिस्तनी कुब्जेन सह प्रलुब्धा। आह च। भो सुभग यद्ययमन्धः कथ मपि व्यापाद्यते तदावां सुखेन कालं नयावः। तदन्विष्यतां क्वापि १० विषं। येन तद्दत्वामुं व्यापाद्य सुखिनी भवामि। अथान्येद्युः कुब्जेन परिभ्रमता मृतः कृष्णसर्पः कुत्राप्यासादितः। तं गृहीत्वा प्रहृष्टमनाः स्वगृहमभ्येत्य तामाह। सुभगे लब्धो ऽयं कृष्णसर्पः। तदेनं खण्डशः कृत्वा प्रभूतशुण्ठ्यादिभिः संस्कृत्यामुष्मै विगतनयनाय मत्स्यामिषमिद मिति कथयित्वा सम्प्रयच्छ येन द्राग्विनश्यति। यतो ऽस्य मत्स्यामिषं १५ सदा प्रियं। एवमुक्त्वा भूयो ऽपि मन्थरको हट्टमार्गं प्रतिप्रस्थितः। सापि प्रदीप्ते वह्नौ कृष्णसर्पं खण्डीकृत्य तक्रस्थाल्यां निधाय चुल्ली मस्तकमारोप्य स्वयं गृहव्यापारव्याकुलतया तमन्धं सप्रश्रयमिदमाह। आर्यपुत्र अहमद्य तवाभीष्टतमान् मत्स्यान् समानीय पचन्ती तिष्ठामि। तद्यावदहं गृहव्यापारान्तरं करोमि। तावत् त्वं दर्वीं गृहीत्वा तान् २० प्रचालय। सो ऽपि तच्छ्रुत्वा प्रहृष्टमनाः सृक्किणीं परिलिहन् सत्व रमुत्थाय दर्वीमादाय तान् प्रचालयितुमारब्धः। अथ तान् प्रचालयतो विषगर्भेण वाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्यां मन्दं मन्दमगलत्। सो ऽपि तमेव बहुगुणं मन्यमानो विशेषेण नेत्राभ्यां वाष्पग्रहणम करोत्। ततः स्पष्टदृष्टिर्यावत् पश्यति। तावत् तक्रमध्ये कृष्णसर्पशक २५ लानि केवलानि। ततो व्यचिन्तयत्। अहो किमेतत्। ममाग्रे मत्स्या

मिषं कथितमासीत् एतानि पुनः कृष्णसर्पशकलानि। तत् तावद्विजा नामि सम्यक्। किं त्रिस्तन्याः चेष्टितमिदं। किं वा मद्वधायैष उप क्रमो मन्थरकस्य। उताहोस्विदन्यस्य कस्यचित्। एवं सञ्चिन्तयन्नाकारं निगूहयन्नन्धकवत् कर्म करोति यथा पुरा। अत्रान्तरे मन्थरकः समागत्य निःशङ्कमालिङ्गनचुम्बनादिभिस्त्रिस्तनीं सेवितुमुपचक्रमे। ५ अन्धो ऽपि सर्वमालोकयन् यावन्न किञ्चिच्छस्त्रं पश्यति। तावत् क्रोधान्धः पूर्ववत् समीपं गत्वा मन्थरकं चरणाभ्यामादाय शरीरबलसामर्थ्यान्मस्तकोपरि भ्रामयित्वा तस्यास्त्रिस्तन्या हृदये व्यताडयत्। अथ कुब्जशरीरप्रहारेण तस्यास्तृतीयस्तन उरसि प्रविष्टः। पृष्ठप्रदेशस्तनस्पर्शात् कुब्जकः प्राञ्जलतां गतः। अतो ऽहं ब्रवीमि। १०

अन्धकः कुब्जकश्चैव राजकन्या च त्रिस्तनी।
त्रयो ऽप्यन्यायतः सिद्धाः सन्मुखे कर्मणि स्थिते॥ ८५॥

सुवर्णसिद्धः प्राह। भो सत्यमेतत् त्वयाभिहितं। दैवानुकूलतया सर्वत्र कल्याणं सम्पद्यते। परं तथापि पुरुषेण सतां वचनं कार्यं। पुनरेवमेव यो वर्तते स त्वमिव विनश्यति। तथा च। १५

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः॥ ८६॥

चक्रधर आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चित् **कथा** समुद्रोपकण्ठे भारण्डो नाम पक्ष्येकोदरः द्विमुखः प्रतिवसति स्म। ॥१४॥ तेन समुद्रतीरे परिभ्रमता किञ्चित् फलममृतकल्पं तरङ्गाक्षिप्तं सम्प्राप्तं। २० सो ऽपि भक्षयन्निदमाह। अहो बहूनि मयामृतप्रायाणि समुद्रकल्लोलाहृतफलानि भक्षितानि। परमपूर्वो ऽस्यास्वादः। तत् किं पारिजातहरिचन्दनतरुसम्भवं। किं वा किञ्चिदमृतमयं फलमन्यत् केनापि विधिना पतितं जिह्वासौख्यमनुभवामि। तस्यैवं ब्रुवतो द्वितीयमुखेनाभिहितं। भो यद्येवं तन्ममापि स्तोकं प्रयच्छ येनाहमपि जिह्वा २५

सौख्यमनुभवामि। ततो विहस्य प्रथमेनैं वक्रेणाभिहितं। आवयो
स्तावदेकमुदरं सामान्यतृप्तिश्च भविष्यति। तत् किं पृथग्भक्षणेन।
वरमनेन शेषेण प्रियतमा सन्तोषिता। एवमभिधाय तेन भक्षितशेषं
भारुण्ड्याः प्रदत्तं। सापि तदास्वाद्य प्रहृष्टतमालिङ्गनचुम्बनसम्भाव
५नानेकचाटुपरा बभूव। द्वितीयमुखं तद्दिनादेव प्रभृति सोद्वेगं सवि
षादं च तिष्ठति। अथान्येद्युर्द्वितीयमुखेन विषवृक्षफलं प्राप्तं। तद्दृष्ट्वा
द्वितीयमुखमाह। भो निस्त्रिंशपुरुषाधम निरपेक्ष मया विषफलमासा
दितं। तत् तवापमानाद्भक्षयिष्यामि। प्रथमेनाभिहितं। मूर्ख मा मैवं
कुरु। एवं कृते द्वयोरपि विनाशो भविष्यति। तत् क्षम्यतामपराधः।
१०नाहं कदाचिदपि त्वामपकारयिष्यामीति। अथैवं वदतो ऽपि तस्य
तेन विषफलं भक्षितं। किं बहुना द्वावपि विनष्टौ। अतो ऽहं
ब्रवीमि।

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः।
असंहता विनश्यन्ति भारुण्डा इव पक्षिणः ॥८७॥

१५चक्रधर आह। भो एवमेवैतत्। सत्यमभिहितं। तद्गच्छ स्वगृहं।
परं नैकाकिना गन्तव्यं। उक्तं च यतः।

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात्।
एको न गच्छेदध्वानं नैकः स्वार्थान् प्रचिन्तयेत् ॥८८॥

अपि च। अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः।
२० कर्कटेन द्वितीयेन सर्पात् पान्थः प्ररक्षितः ॥८९॥

कथा ॥१५॥ सुवर्णसिद्ध आह। कथमेतत्। सो ऽब्रवीत्। अस्ति कस्मिंश्चि
दधिष्ठाने ब्रह्मदत्तो नाम ब्राह्मणः प्रतिवसति स्म। स च प्रयोजन
वशात् किञ्चिद्ग्रामान्तरं प्रस्थितः। स स्वमात्राभिहितः। वत्स कथं
त्वमेकाकी प्रयासि तदन्विष्यतां कश्चिद्द्वितीयः। मार्गे सहायस्ते भवेत्।
२५अथ तेनाभिहितं। अम्बे मा भैषीः। निरुपद्रवो ऽयं मार्गः। ततो

गुरुकार्यवशादेकाक्यप्यहमंत्रैव गमिष्यामि। अथ तन्निश्चयं विज्ञाय समीपवर्तिकूपस्थितकोटरात् कर्कटकमादाय मात्रा पुत्रो ऽभिहितः। वत्स अवश्यं यदि गन्तव्यं तदेष कर्कटकस्ते सखा भविष्यति। तदेनं यत्नेन गृहीत्वा गच्छ। सो ऽपि मातृगौरवादुभाभ्यां हस्ताभ्यां तं सङ्गृह्य कर्पूरपुटिकामध्ये सन्निधाय मात्रामध्ये प्रक्षिप्य शीघ्रं प्रस्थितः। ५ अथ गच्छमानो ग्रीष्मसन्तप्तः कश्चिन्मार्गे वृक्षमासाद्य तदधः सुखं सुष्वाप। अत्रान्तरे वृक्षकोटरात् कृष्णसर्पो विनिर्गत्य तमुपाद्रवत्। अथ कर्पूरपरिमलेनापि धृष्यमाणेन्द्रियः कृष्णसर्पस्तं परित्यज्य मात्राभस्त्रां विदार्याभ्यन्तरगतं कर्पूरपुटिकमतिलौल्यादभक्षयत्। सो ऽपि कुलीरस्तेन भक्षितो ऽप्यन्तर्गलगत एव तस्य फणिनः प्राणानपाहरत्। १० ब्राह्मणो ऽपि सञ्जातनिद्राप्रलयो यावत् पश्यति। तावत् समीपे कृष्णसर्पो विदारितमात्राभस्त्रो भक्षितकर्पूरपुटिको मृतो ऽस्ति सर्पसमीपस्थितः कर्कटश्च। तं दृष्ट्वा व्यचिन्तयत्। भो सत्यमभिहितं मम मात्रा यद्द्वितीयः को ऽपि सहायः कार्यः। परं तु पथि नैकाकिना गन्तव्यं। यतो मया श्रद्धापूरितचेतसा तद्वचनमनुष्ठितं। तेनाहं कर्क १५ टेनापि सर्पव्यापादनाद्रक्षितः। अथवा साधिदमुच्यते।

> क्षीणः स्रवति शशी रविवृद्धौ वर्धयति पयसां नाथं।
> अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥ १० ॥
> मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
> यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ११ ॥ २०

एवमुक्त्वासावभिप्रेतं गतः। अतो ऽहं ब्रवीमि।

> अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः।
> कर्कटेन द्वितीयेन सर्पात् पान्थः प्ररक्षितः ॥ १२ ॥

एवं श्रुत्वा सुवर्णसिद्धस्तमनुज्ञाप्य स्वगृहं प्रति निवृत्तः।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके
अपरीक्षितकारितं नाम पञ्चमं तन्त्रं
समाप्तं

एतत् पञ्चतन्त्रापरनामकं पञ्चाख्यानकं नाम नीतिशास्त्रं समाप्तं ।

कथान्वितं सत्कविसूक्तयुक्तं श्रीविष्णुशर्मा नृपनीतिशास्त्रं ।
चकार येनेह परोपकारः स्वर्गाप्यतो येन बुधा वदन्ति ॥

॥ शुभमस्तु ॥

# INDEX FABULARUM.

## LIBER TERTIUS

quo de inimicitia exponitur, enarrato bello, quod cornices intulerunt ululis . . . . . . pag. 148



## LIBER QUARTUS

quo de bono amisso exponitur, narratis iis, quibus factum est, ut crocodilus amicum et domum amitteret . . . 205



## LIBER QUINTUS

quo de iis, quae inconsiderate aguntur, exponitur, narratis iis, quae hominibus temere agentibus acciderunt . 234